आ० डा० भालचन्द्र कृष्ण भाटवडेकर, एल्. एम्., जे पी



"विपदि धैर्यमथाभ्युदये क्षमा । सदसि वाक्पटुता युधि विक्रमः ॥
यशसि चाभिरुचिर्व्यसनं श्रुतौ । प्रकृतिसिद्धमिदं हि महात्मनाम् ॥"

अर्पणपत्रिका.



भो सुसम्मान्य (ऑनरेबल्) डा० भालचंद्र कृष्ण भाटवडेकर! एल्. एम्., जे. पी., इत्यादि सत्पदवीधर, मुम्बापुरी-भूषणभूत!



'भवदीया'
आयुर्वेदविषयेषु सदन्तःकरणपूर्वकाः प्रयत्नाः,
नृपति-जनपदानान्दुर्लभकार्यकर्तृत्व-
विषयेषु तत्परतया तत्परता, मा-
र्मिकीया सुविद्यता, इत्याद्य-
नेकगुणगणेषु लुब्धं भूत्वा,
तथा च
प्रेमसन्दर्शकमिदम्पुस्तकं यत्किञ्चि-
द्दर्शकं ज्ञात्वा, सादरविन-
येनाहं समर्पयामि.



# निघंटशिरोमणेः प्रथमभागस्यानुक्रमणिका.

सम्पूर्णोऽयं प्रथमो भागः ।

# निघंटशिरोमणेर्द्वितीयभागानुक्रमणिका.

### १३ क्षीरादिवर्गः

श्रीशंकर.

# श्रीनिघंटशिरोमणिः ।

## द्वितीयः पार्श्वः ( भागः ) ।

### ६ शाल्मल्यादिवर्गः ।

( प्रथमपार्श्वादग्रे )

६२ गर्मोटिका । म० गोंडा लोणा गवत, जरडी । गर्मोटिका सुनीला च जरडी च जलाश्रया । गुणाः । जरडी मधुरा शीता सारिणी दाहहारिणी ॥ ८१ ॥ रक्तदोपहरा रुच्या पशूनां दुग्धदा ' नृप ' । ६३ मज्जर । म० पवना गवत । गु० मज्जरतृण । मज्जरः पवनः मोक्तः सुतृणः स्निग्धपत्रकः । गुणाः । मृदुग्रंथिश्च मधुरो धनुदुग्धकरो ' नृप ' ॥ ८२ ॥ ६४ पत्राढ्य । म० शेंडे गवत । गु० पत्राढ्य । तृणाढ्य पर्वततृणं पत्राढ्यं च मृगप्रिय । गुणाः । बलपुष्टिकरं रुच्यं पशूनां सर्वदा हितं ॥ ८३ ॥ ६५ वंशपत्री । म० वंशपत्री गवत । गु० वंशपत्री तृण । वंशपत्री वशदला जीरिका जीर्णपत्रिका । गुणाः । वंशपत्री सुमधुरा शिशिरा पित्तनाशिनी ॥ ८४ ॥ रक्तदोपहरा रुच्या पशूनां दुग्धदा ' नृप ' । ६६ मंथानक । म० मारवेल, मुरें गवत । गु० मंथानक । मथानकस्तु हरितो दृढमूलस्तृणाधिपः ॥ ८५ ॥ गुणाः । स्निग्धो धनुप्रियो दोग्धा मधुरो बहुवीर्यकः । ६७ पल्लिवाह । म० पोकळी गवत, तांबडे पातीचें । गु० पल्लिवाह । पल्लिवाहो दीर्घतृणः सुपत्रस्ताम्रवर्णकः ॥ ८६ ॥ गुणाः । अद्दः शाकपत्रादि पशूनामबलप्रदः । ६८ लवणतृण । म० लोणागवत । गु० लवणतृण । लवण-

तृणं लोणतृणं तृणाम्लं पटुतृणकमम्लकांडं च । गुणाः । पटुतृणकं क्षाराम्लं कषायस्तन्यमश्ववृद्धिकरं ॥ ८७ ॥ ६९ पण्यंध । म० पर्थे गवत । गु० पण्यंध । पण्यंधः कंगुणीपत्रः पण्यंधा पणधा 'नृपे' ॥ ८८ ॥ गुणाः । पण्यंधा समवीर्या स्यात्तिक्ता क्षारा च सारिणी । तत्कालशस्त्रघातस्य व्रणसरोपणी परा ॥ ८९ ॥ दीर्घा मध्या तथा ऱ्हस्वा पण्यंधा त्रिविधा स्मृता । ७० दीर्घकांड । म० तिधारी लव्हा—लव्हाळे । गु० तृणविशेष । गुंडस्तुकांडगुंडस्याद्दीर्घकांडस्त्रिकोणकः ॥ ९० ॥ छत्रगुच्छोऽसिपत्रश्च नीलपत्रस्त्रिधारकः । ७१ लघुगुंड । म० लघु लव्हाळें । गु० तृणविशेष । ७२ वृत्तगुंड । म० वाटोळें लव्हाळें । गु० तृणविशेष । वृत्तगुंडोऽपरोवृत्तो दीर्घनालो जलाश्रयः ॥ ९१ ॥ तत्र स्थूलो लघुश्चान्यस्त्रिधाऽयं 'राजनामके' । गुणाः । गुंडास्तु मधुराः शीताः कफपित्तातिसारहाः ॥ ९२ ॥ दाहरक्तहरास्तेषां मध्ये स्थूलतरोऽधिकः । ७३ गुडकंद । म० कचरा, कचरे । गु० कचरो । गुडकंदः कसेरुः स्यात्क्षुद्रमुस्ता कसेरुका ॥ ९३ ॥ सूकरेष्टः सुगंधिकः सुकंदो गंधकंदलः । प्रोक्तो 'राजनिघंटे' तु भिषग्विद्याविशारदैः ॥ ९४ ॥ राजकसेरुकश्चैव श्यामकंदो 'मदे' तथा । गुणाः । कसेरुकः कषायोऽल्पमधुरोऽतिखरस्तथा ॥ ९५ ॥ दाहहा श्रमहा शीतो रक्तपित्तघ्नको 'नृपे' । हिमो रूक्षश्च मधुरः संग्राही शुक्लस्तथा ॥ ९६ ॥ कफकृत्वातकृच्चैव प्रोक्तो 'कैयनिघंटके' नेत्ररोगहरः प्रोक्तो वैद्यै 'र्भावप्रकाशके' ॥ ९७ ॥ ७४ चणिका । म० वर्णया गवत, चणई । गु० चणई । चणिका दुग्धदा गौल्या सुनीला क्षेत्रजा हिमा । गुणाः । वृष्या बल्याऽतिमधुरा बीजैः पशुहिता तृणैः ॥ ९८ ॥ ७५ गुंडासिनी । म० पाणकणीस । गु० पान्यघाडाडी । गुंडासिनी तु गुंडा च गुंडाला गुच्छमूलका । चिपिटा तृणपत्री च जलवासा सुविष्टरा ॥ ९९ ॥ पृथुला तु तथा प्रोक्ता 'राजनामनिघंटके' । गुणाः । गुंडासिनी कटुः स्वादे पित्तदाहश्रमापहा ॥ २५०० ॥ तिक्तोष्णा श्वयथुघ्नी च व्रणघ्नी 'राजनामके, ।

७६ शूली। म० सुळें गवत। गु० शूली। शूली तु शूलपत्री स्यादशाखा धूम्रमूलिका ॥ १ ॥ जलाश्रया मृदुलता पिच्छला महिषीप्रिया। गुणाः। शूली तु पिच्छिला चोष्णा गुरुर्गौल्या बलप्रदा ॥ २ ॥ पित्तदाहहरा रुच्या दुग्धवृद्धिप्रदा 'नृपे' ॥ ७७ ॥ परिपेल्ल। म० क्षुद्रमोथ, केवटीमोथ, जलमुस्ता। गु० केवटीमोथ। परिपेल्लं प्लवं वन्यं गोपुटं स्यात्कुटन्नटं ॥ ३ ॥ सितपुष्पं दासपुरं गोनर्दं जीर्णबुध्नकं। प्रोक्तं 'राजनिघंटे' तु वैद्यविद्याविचक्षणैः ॥ ४ ॥ वितुन्नकं शुकाह्वं च कैवर्तीमुस्तकं पुटं। वानेयं गोपुरं चैव "भावनामनिघटके' ॥ ५ ॥ तथा दाशपुरं चैव 'कोशे' तु परिपेलवं। गुणाः। परिपेलं कटूष्णं च कफमारुतनाशिनं ॥ ६ ॥ व्रणदाहामशूलघ्न रक्तदोषहरं 'नृपे'। कफपित्तास्रहं चैव तथा विसर्पह 'कये' ॥ ७ ॥ सुगंधिकं च प्रस्वेदमलकंडूविनाशनं। कफवातहरं मेध्यं कांतिदं 'धन्वनामके' ॥ ८ ॥ 'द्रव्ये' दाहहरं प्रोक्तं 'मंदं त्वर्शोविनाशन। कफपित्तहरं प्रोक्तं वैद्ये'गणनिघंटके' ॥९॥ ७८ हिज्जल। म. परळ। गु० जलजांबवो। हिज्जुलोऽथ नदीकांतो जलजो दीर्घपत्रकः। नदीजो निचुलो रक्तकार्मुकः कथितो 'नृपे' ॥ १० ॥ ततो नदीकार्मुकश्च निम्नगो रक्तमंजरी। तोयजातस्तु संप्रोक्तो 'कैयदेवनिघंटके' ॥ ११ ॥ तोयजः कविभिश्चैव प्रोक्तो 'गणनिघंटके'। गुणाः। हिज्जुलः कटूष्णश्च पवित्रो भूतनाशनः ॥ १२ ॥ वातघ्नो ग्रहदोषघ्नो 'राजनामनिघंटके'। कटुतिक्तः कषायश्च भेदः कृमिबलासहा ॥ १३ ॥ शोफोदरहर चैव 'कैयदवनिघंटके'। ॥७९॥ शैवाल। म० शेवाळें। गु० शेवाळ, लील। शैवालं जलनीली स्याच्छैवल जलजं 'नृपे' ॥ १४ ॥ गुणाः। शैवालं शीतल स्निग्धं व्रणसंतापह 'नृपे'। 'भावे' तु तुवरं तिक्तं मधुरं दाहतृट्हरं ॥ १५ ॥ पित्तरक्तज्वरघ्न च प्रोक्त वैद्यैर्न संशयः ।

॥ इति शाल्मल्यादिवर्गः समाप्तः ॥

## ७ प्रभद्रादिवर्गः

१ प्रभद्र। म० कडू निंब । गु० लिंबडो। प्रभद्रः पिचुमंदश्च निंबस्तु पारिभद्रकः ॥ १६ ॥ तथा काकफलश्चैव कीटेष्टोऽरिष्ट एव च। धमनः सर्वतोभद्रः शीतश्च पीतसारकः ॥ १७ ॥ वरतिक्तोऽरिष्टफलो ग्वेष्टामलक एव च। छर्दनो हिंगुनिर्यासो यवनेष्टस्तथैव च ॥ १८ ॥ नेताऽग्निधमनश्चैव 'नृपे' विशीर्णपर्णकः। सुतिक्तको नियमनो 'धन्वंतरिनिघंटके' ॥ १९ ॥ शुकप्रियः सुभद्रश्च कृमिघ्नः 'कैयदेवके'। सुतिक्तो 'मदने' चैव पिचुमर्दस्तु 'मावके' ॥ २० ॥ पवनेष्टस्तथा प्रोक्तो भिषग्विद्याविशारदैः। गुणाः। निंबः शीतस्तु तिक्तश्च कफव्रणबलासहा ॥ २१ ॥ कृमिशोफविषघ्नश्च पित्तहृद्दाहहा 'नृपे'। कुष्ठकृमिच्छर्दिहरः प्रोक्तो 'धन्वनिघंटके' ॥२२॥ अपक्वशोफपचनः पक्वव्रणविशोधनः। पाके कटुर्वातलश्च ग्राही हृद्यस्तु मेहहा ॥२३॥ ज्वरकासारुचिहरस्तृषा हृल्लासरक्तहा। तत्फलं तु रसे पाके भेदनं तुष्णमेव हि ॥२४॥ कुष्ठगुल्मार्शकृमिहृन्मेहहृत् 'कैयदेवके'। नेत्र्यं 'भावप्रकाशे' तु प्रोक्तं वैद्यैर्न संशयः ॥ २५ ॥ २ महानिंब। म० बकाणनिंब। गु० बकान। महानिंबो महाद्रेकः कार्मुकः केशमुष्टिकः। काकांडो रम्यकः क्षीरो महातिक्तो हिमद्रुमः ॥ २६ ॥ प्रोक्तो 'राजनिघंटे' तु 'धन्वे' च विषमुष्टिकः। निंबवरो निंबरको द्रेकः प्रोक्तस्तथा ध्रुवं ॥ २७ ॥ निंबरः 'कैयदेवे' तु गिरिको मालकस्तथा। बृहन्निंबो 'गणे' प्रोक्तस्तथा च शुक्रशालकः ॥ २८ ॥ गुणाः। महानिंबस्तु शिशिरः कषायः कटुतिक्तकः। असृग्दाहबलासघ्नो विषमज्वरहा 'नृपे' ॥ २९ ॥ शीतपित्तकफघ्नश्च विषूचीकुष्ठहा 'धन्वं'। रूक्षो ग्राही रक्तपित्तविषकृमिहरः 'कये' ॥ ३० ॥ रक्तहृल्लासच्छर्दिघ्नः श्लेष्मपित्तहरो 'मद'। कफपित्तप्रमेहघ्नो गुल्मार्शःश्वासनाशनः ॥ ३१ ॥ मूषकानां विषघ्नश्च प्रोक्तो 'भावप्रकाशके'। ३ कैडर्य। म० महारुख, कवड्यानिंब। गु० अरडूसो। कैडर्योऽन्यो

महानिंबो रामणो रमणस्तथा ॥ ३२ ॥ गिरिनिंबो महारिष्टः शुक्रशालेलकाव्हयः । 'नृपे' प्रोक्तस्तथा 'धन्वे' च्छर्दिघ्नः पिचुमंदकः ॥ ३३ ॥ पार्वतो हिंगुनिर्यासः मियशालो वरत्वचः । गुणाः । कैडर्यः कटुकस्तिक्तः कषायः शीतलो लघुः ॥ ३४ ॥ संतापशोषकुष्ठास्रक्रिमिभूतविषापहः । ४ भूनिंब । म० पाले किराईत । गु० पानकरियातु । भूनिंबो नार्यतिक्तः स्यात्कैरातो रामसेनकः ॥३५॥ कैराततिक्तको हैमः कांडतिक्तः किरातकः ॥ प्रोक्तो 'राजनिघंटे' तु भिषग्विद्याविशारदैः ॥ ३६ ॥ गुणाः । भूनिंबो वातलस्तिक्तः कफपित्तज्वरापहः । व्रणसंरोपणः पथ्यः कुष्ठकडूतिशोफनुत् ॥ ३७ ॥ ५ नेपाल । म० किराईत, काडेचिराईत । गु० करियातु । नेपालनिंबो नेपालस्तृणनिंबो ज्वरांतकः । नाडीतिक्तोऽर्धतिक्तश्च निद्रारिः सन्निपातहा ॥ ३८ ॥ 'नृपे' प्रोक्तो तथा 'धन्वे' महातिक्तश्च तिक्तकः । गुणाः । नेपालनिंबः शीतोष्णः कफपित्तास्रशोफहा ॥३९ ॥ लघुतिक्तो योगवाही तृष्णाज्वरहरो 'नृपे' । कासघ्नश्च तथा प्रोक्तो 'धन्वंतरिनिघंटके' ॥ ४० ॥ रूक्षो रसे तु तिक्तः स्यात्सरो मेहहरो ध्रुवं । श्वासकासारुचिहरो दाहशोषविनाशनः ॥ ४१ ॥ क्रमिहा 'कैयदेवे' च 'द्रव्यरत्ने' त्रिदोषहा । ६ कट्फल । म० कुंभी, तांबडा कुंभा, कायफळ । गु० कायफळ । कट्फलः कृष्णगर्भश्च सोमवल्कः प्रचेतसी ॥ ४२॥भद्रावती महाकुंभी कैडर्यो रामसेनकः । कुमुदा चोग्रगंधश्च भद्रा रंजनकस्तथा ॥ ४३॥ कुंभी च लघुकाश्मर्यः श्रीपर्णी 'राजनामके' । महावल्कः कुंतिका च कुभा च सोमपादपः ॥ ४४॥ त्रुटी चैव महाकुंभी रोहिणी 'कैयदेवके' । तथा कुमुदिका चैव प्रोक्ता 'भावप्रकाशके' ॥ ४५ ॥ गुणाः । कट्फलः कटुरुष्णश्च कासश्वासज्वरापहः । उग्रदाहहरो रुच्यो मुखरोगहरो 'नृपे' ॥ ४६ ॥ अर्शोयक्ष्मापहा चैव 'कैयदेवनिघंटके' । दाहपित्तज्वरक्रुमियोनिदोषहरो ध्रुवम् ॥ ४७ ॥ रक्तातिसारजित्प्रोक्तो वैद्यै 'र्गणनिघंटके' । कफवातहरो चैव गुल्ममेहाग्निमांद्यजित् ॥ ४८ ॥ पाडुरोगामग्रहणीहृल्लासघ्नो 'धंन' तथा । ज्वरकंठामयक्रकडुघ्नश्च तथा

मही । तथा मधुरसा, चैव 'भावे' तु पीतरोहिणी ॥ ८४ ॥
गुणाः । काश्मरी कटुका तिक्ता गुर्व्युष्णा कफशोफनुत् । त्रिदोषविषदाहार्ति-
ज्वरतृष्णास्रदोषजित् ॥ ८५ ॥ प्रोक्ता 'राजनिघंटे' तु भिषग्विद्यावि-
शारदैः । तत्फलं तु हिमं स्निग्धं गुरु हृद्यं च बृंहणं ॥ ८६ ॥ शुक्रलं
चैव केश्यं च मेध्यं मूत्रविबंधहृत् । दाहवाततृषाघ्नं च रक्तपित्तहरं
ध्रुवं ॥ ८७ ॥ क्षतक्षयहरं प्रोक्तं वैद्यैः 'कैयनिघंटके' । रक्तपित्तज्वरघ्नं
च पुष्पं वृष्यं च बल्यकं ॥ ८८ ॥ कफपित्तहरं प्रोक्तं 'धन्वंतरिनिघंटके' ।
मधुरा चैव वीर्योष्णा ह्यामशूलविनाशिनी ॥ ८९ ॥ तत्पुष्पं मधुरं शीतं
संग्राहि वातलं ध्रुवं । पाके कषायमधुरं पित्तासृङ्नाशनं तथा ॥ ९० ॥
कफपित्तहरं 'कैये' त्वशोघ्नं 'भावनामके' । १३ अश्मंतक । म० आपटा ।
गु० आशोंदरो । अश्मंतकश्चेंदुकश्च कुद्दालस्ताम्रपत्रकः ॥ ९१ ॥ अश्मां-
तकश्चेंदुरुफरी शिलान्तश्चार्बुदः स्मृतः । पाषाणान्तक इत्युक्तो 'राजनाम-
निघंटके' ॥ ९२ ॥ चंद्रकः कुशली चैव तथा यमलपत्रकः । श्लक्ष्ण-
त्वङ्मालकापत्रो 'धन्वंतरिनिघंटके' ॥ ९३ ॥ पापहरोऽश्मयोनिश्च
'कैयदेवनिघंटके' । युग्मपत्रो 'द्रव्यरत्ने' 'मदने' पापनाशनः ॥ ९४ ॥
भिषग्विद्याप्रवीणैस्तु संप्रोक्तो यमलच्छदः । गुणाः । अश्मंतकस्तु मधुरः
कषायः शीतलो ध्रुवं ॥ ९५ ॥ पित्तप्रमेहदाहघ्नो तृड्विषमज्वरापहः ।
विषछर्दिभूतनिघ्नः प्रोक्तो 'राजनिघंटके' ॥ ९६ ॥ तत्पुष्पं तु भवद्रूक्षं
रक्तपित्तविनाशनं । प्रदरक्षयकासघ्नं प्रोक्तं 'भावप्रकाशके' ॥ ९७ ॥
कफपित्तहरं प्रोक्तं 'धन्वंतरिनिघंटके' । अम्लो ग्राही वातकफगंडमाला-
सनाशनः ॥ ९८ ॥ गलगंडादिरोगघ्नः तत्फलं वैद्यनायकैः । आध्मान-
कारकं प्रोक्तं 'कैयदेवनिघंटके' ॥ ९९ ॥ शस्त्रव्रणहरं प्रोक्तं 'द्रव्य-
रत्ने' भिषग्वरैः । वातातिसारनिघ्नं च प्रोक्तं 'गणनिघंटके' ॥ २५०० ॥
१४ कर्णिकार । म० लघु बाहवा । गु० लहानो गरमाळो । कर्णि-
कारो राजतरुः प्रग्रहः कृतमालकः । परिव्याधो व्याधिरिपुः सुफलः
पंक्तिबीजकः ॥ १ ॥ प्रोक्तो 'राजनिघंटे' तु तथा 'धन्वनिघंटके' ।

आरोग्यशिंबी शम्याको व्याधिघातो व्यथांतकः ॥ २ ॥ ' कैये ' रैवतः फलपद्रः स्वर्णद्रुश्चोपघातकः । **गुणाः** । कर्णिकारो रसे तिक्तः कटूष्णः कफशूलहृत् ॥ ३ ॥ उदरकृमिमेहघ्नो व्रणगुल्महरो ' नृपे '। १५ **आरग्वध** । म० थोर बाहवा । गु० मोठो गरमाळो । आरग्वधोऽन्यो मंथानो रोचनश्चतुरंगुलः ॥ ४ ॥ आरेवतो दीर्घफलो व्याधिघातो नृपद्रुमः । हेमपुष्पो राजतरुः कंडूघ्नश्च ज्वरान्तकः ॥ ५ ॥ अरुजः स्वर्णपुष्पश्च स्वर्णद्रुः कुष्ठसूदनः । कर्णाभरणकः प्रोक्तो महाराजद्रुमः स्मृतः ॥ ६ ॥ कर्णिकारो महादिः स्यात्प्रोक्तो ' राजनिघंटके '। व्याधिघ्नश्चैव कर्णी च ' धन्वंतरिनिघंटके ' ॥ ७ ॥ ' द्रव्यं ' ' कैये ' व्याधिजिच्च नराधिप्युपघातकः । ' मदे ' ' भावे ' तथाऽरोग्नः स्वर्णांगः स्वर्णभूषणः ॥ ८ ॥ ' कोश ' सुवर्णकश्चैव ' मणे ' च त्वधरेचनः । **गुणाः** । आरग्वधोऽतिमधुरः शीतः शूलापहारकः ॥ ९ ॥ ज्वरकंडूकुष्ठमेहकफविष्टंभहा ' नृपे ' । रसे तिक्तो गुरूष्णश्च कृच्छ्रगुल्मत्रिदोषजित् ॥ १० ॥ उदरकृमिहृत्प्रोक्तो ' धन्वंतरिनिघंटके '। तत्पुष्पं शिशिरं स्वादु कषायं ग्राहि वातलं ॥ ११ ॥ पाके कटु कुष्ठहरं कफपित्तविनाशनं । मज्जागुणः स्वादुः पाके ह्यग्निकृत्स्निग्ध एव च ॥ १२ ॥ हिमस्तिक्तो मधुश्चैव मृदुरेचनकारकः । व्रणोदावर्तहृद्रोगवातपित्तहरः ' कैये ' ॥ १३ ॥ त्रिदोषघ्नी तु मज्जा च रक्तपित्तहरा ' मदे ' । १६ **वृश्चिकाली** । म० लघु मेढशिंगी । गु० नहानी मेढाशिंगी । वृश्चिकाली विषाणी च विषघ्नी नेत्ररोगहा ॥ १४ ॥ उष्ट्रिकाऽप्यालिपर्णी च दक्षिणावर्तकी तथा । कालिकाऽप्यागमावर्ता देवलांगुलिका तथा ॥ १५ ॥ करभी भूरिदुग्धा च कर्कशा चामरा च सा । स्वर्णपुष्पा युग्मफला तथा क्षीरविषाणिका ॥ १६ ॥ तथा भासुरपुष्पा च ' राजनामनिघंटके ' । वृश्चिपत्री कालनेमी प्रोक्ता वैद्यविशारदैः ॥ १७ ॥ **गुणाः** । वृश्चिकाली कटुस्तिक्ता सोष्णा हृद्वक्त्रशुद्धिकृत् । रक्तपित्तहरा बल्या विबंधारोचकापहा ॥ १८ ॥ १७ **कुटज** । म० कुडा । गु० कडो । कुटजः

' राजके ' ॥ ५३ ॥ हस्तिनी उदकीर्णश्च तथैव हस्तिवारुणी । रोहिकप्रियसंज्ञश्च तथा च करमंडिका ॥ ५४ ॥ ' धन्वंतरिनिघंटे ' तु संप्रोक्ता करभंजिका । ' भावे ' च मर्कटी चैव केये तु मातृनंदनः ॥ ५५ ॥ फरंजकस्तथा प्रोक्तो ' गणनामनिघंटके ' ।गुणाः। महाकरंजस्तिक्तोष्णः कटुको विषनाशनः ॥ ५६ ॥ कंडूविचर्चिकाकुष्ठत्वग्दोषव्रणहा ' नृपे ' । मेहकुष्ठच्छर्दिकृमिनाशकः ' केयदेवके ' ॥ ५७ ॥ २४ **पूतिकरंज** । म० घाणेरा करंज । गु० दुर्गंध करंज। प्रकीर्यो रजनीपुष्पः सुमनाः पूतिकर्णकः । पूतिकरंजः कैडर्यः कलिमालश्च ' राजके ' ॥ ५८ ॥ २५ **गुच्छकरंज** । म० गेंडे करंज । गु गुच्छकरंज । गुच्छकरंजो गुच्छी च सानंदो गुच्छपुच्छकः । स्निग्धदलो मातृनंदी नंदी च दंतधावनः ॥ ५९ ॥ गुणाः । करंजः कटुतिक्तोष्णो विषवातार्तिनाशनः। कंडूविचर्चिकाकुष्ठस्पर्शत्वग्दोषहा ' नृपे ' ॥ ६० ॥ २६ **रीठाकरंज** । म० रिठा । गु० अरिठा । अथ रीठाकरंजश्च गुच्छलो गुच्छपुष्पकः । रीठा गुच्छफलोऽरिष्टो मंगल्यः कुंभबीजकः ॥ ६१ ॥ प्रकीर्यः सोमवल्कश्च फेनिलो ' राजनामके ' । कुंभबीजो गर्भपाती रक्तबीजस्तथैव च ॥ ६२ ॥ रक्तबीजः ' केयदेवे ' ' मदने ' चार्थसाधनः । तथा ' भावप्रकाशे ' तु मांगल्यः कृष्णवर्णकः ॥ ६३ ॥ गुणाः । रीठाकरंजस्तिक्तोष्णः कटुस्निग्धश्च वातजित् । कफघ्नः कुष्ठकंडूतिविषविस्फोटहा ' नृपे ' ॥ ६४ ॥ पाके कटुर्लेखनश्च लघुर्दोषत्रयापहः । गर्भपाती ग्रहहरः प्रोक्तः ' केयनिघंटके ' ॥ ६५ ॥ २७ **अंकोल** । म०, गु० अंकोल । अंकोलः कोटरो रेची गूढपत्रो निकोचकः । गुप्तस्नेहः पीतसारो मदनो गूढमल्लिका ॥ ६६ ॥ पीतस्ताम्रफलो ज्ञेयो दीर्घकीलो गुणाढ्यकः । कोलको लंबकर्णश्च गंधपुष्पश्च रोचनः ॥ ६७ ॥ विज्ञानतैलगर्भश्च ' राजनामनिघंटके ' । ' धन्वंतरिनिघंटे ' तु अंकोटस्तु निकोचनः ॥ ६८ ॥ भूपिता भूसुता चैव हुंडिका ' केयदेवके ' । कोटभेरिकीलश्च ' गणनामनिघंटके ' ॥ ६९ ॥ गुणाः ।

अंकोलः कटुकः स्निग्धो विषलूतादिदोषनुत् । कफानिलहरः सूतः शुद्धिकृद्रेचनो 'नृपे' ॥ ७० ॥ शूलशोफव्रणघ्नश्च कृमिवीसर्पहा ध्रुवं । कफपित्तामनिघ्नश्च तत्फलं शीतश्लेष्मलं ॥ ७१ ॥ मधुरं तु रसे पाके स्निग्धं वृष्यं च बृहणं। रक्तपित्तानिलहरः पित्तदाहहरस्तथा ॥ ७२ ॥ क्षतक्षयविनाशश्च प्रोक्तः 'कैयनिघंटके'। स्निग्धस्तिक्तोष्णकश्चैव वांतिकृच्च सरस्तथा ॥ ७३ ॥ श्वानाखुगृहजंतूनां विषघ्नो भूतनाशनः। कटिशूलहरः प्रोक्तो 'धन्वंतरिनिघंटके' ॥ ७४ ॥ मार्जारविषनिघ्नश्च 'द्रव्यरत्ने' प्रकीर्तितः । अतिसारहरश्चैव सर्पाणां विषनाशनः ॥ ७५ ॥ पित्तकृद्विषजां श्रेष्ठः प्रोक्तो 'गणनिघंटके'। २८ नीलवृक्ष । म०, गु० नीळवृक्ष । नीलस्तु नीलवृक्षश्च वातारिः शोफनाशनः ॥ ७६ ॥ नरनामा नखालुश्च नखवृक्षो नखप्रियः । गुणाः । नीलवृक्षस्तु कटुकः कषायोष्णो लघुस्तथा ॥ ७७ ॥ वातामयप्रशमनो नानाश्वयथुहा 'नृपे'। २९ सर्ज । म० थोर राळेचा वृक्ष । गु० राळनुं मोटुं झाड । सर्जः सर्जरसः शालः कालकूटो रजोद्भवः ॥ ७८ ॥ वल्लीवृक्षश्चीरपर्णो रालः कार्श्योऽजकर्णकः । वस्तकर्णः कषायी च ललनो गंधवृक्षकः ॥७९॥ वंशश्च शालनिर्यासो दिव्यसारः सुरेष्टकः । शूरोमिवल्लभश्चैव यक्षधूपः सुसिद्धकः ॥ ८० ॥ 'नृपे' प्रोक्तो तथा 'धन्वे' सस्यसंवरकः स्मृतः । स्वेदघ्नश्च लतावृक्षः कुदेहो 'द्रव्यनामके' ॥ ८१ ॥ देवधूपस्तथा 'भावे' रसनिर्यासको 'गणे'। कल्याणी श्रीतरुः कांतः कांतिवृक्षस्तथा स्मृतः ॥ ८२ ॥ मदयोनिः स्वेदहरो कुशरीरस्तथैव च । सालस्तु 'कोशे' संप्रोक्तो 'कैये' तु रंजनद्रुमः ॥ ८३ ॥ गुणाः । सर्जस्तु कटुतिक्तोष्णो हिमः स्निग्धोऽतिसारजित् । पित्तास्रकुष्ठकंडूघ्नो वातविस्फोटहा 'नृपे' ॥ ८४ ॥ वर्ण्यो रूक्षः कफघ्नश्च 'धन्वंतरिनिघंटके'। नेत्ररुक्कृमिहृत्पित्तव्रणहृत् 'द्रव्यनामके' ॥ ८५ ॥ 'मदे' स्वेदहरः प्रोक्तः पुरातनचिकित्सकैः । पांडुश्रुतिगदघ्नश्च मेहघ्नो 'भावनामके' ॥ ८६ ॥ ३० अश्वकर्ण । म० लघु राळेचा वृक्ष । गु०

राळनुं नहानुं झाड । जरणद्रुमोऽश्वकर्णो दीर्घपर्णश्च कौशिकः । तार्क्ष्य-प्रसवकश्चैव सरयसंवरणस्तदा ॥ ८७ ॥ कुशिकतरुस्तु धन्यो ' राजना-मनिघंटके ' । दीर्घवृक्षोऽरण्यः ' कैये ' ' धन्वे ' तु चिरपत्रकः ॥ ८८ ॥ गुणाः । अश्वकर्णः कटुस्तिक्तो स्निग्धः पित्तास्रनाशनः । ज्वरविस्फोट-कंडूघ्नः शिरोर्तिनाशनो ' नृपे ' ॥ ८९ ॥ मेहकुष्ठव्रणकफहरः प्रोक्तो ' गणे ' तथा । ३१ ताल । म० खरताल, ताडवृक्ष । आंध्रदेशांत प्रसिद्ध । गु० ताड । तालस्तालद्रुमः पत्री दीर्घस्कंधो ध्वजद्रुमः ॥ ९० ॥ तृणराजो मधुरसो मदाढ्यो दीर्घपादपः । चिरायुस्तरुराजश्च गज-भक्षो दृढच्छदः ॥ ९१ ॥ दीर्घपत्रो गुच्छपत्रोऽप्यासवद्रुश्च ' राजके ' । तथा दुरारुहः प्रांशु ' धन्वे ' चैव द्रुमेश्वरः ॥ ९२ ॥ ' भावे ' महोन्नतश्चैव तथा ' गणनिघंटके ' । ध्वजवृक्षो मद्ययोनिर्ध्वजः खलः शठस्तथा ॥ ९३ ॥ दीर्घदंडो महावृक्षः श्रीबीजः ' कैयदेवके ' । गुणाः । तालः सरः शीत-पित्तदाहश्रमकफघ्नकः ॥ ९४ ॥ पित्तघ्नो मधुरश्चैव शोषनुन्मदकृत् ' न्नृपे ' । तत्फलं तु सरं बल्यं विष्टंभि बृंहणं ' तथा ' ॥ ९५ ॥ ' कैये ' च तर्पणं वृष्यं कफमांसहरं ध्रुवं । पित्तदाहक्षयघ्नं च वातपित्तास्रनाशनं ॥ ९६ ॥ बीजं शुक्रकरं हैमं तात पित्तहरं ध्रुवं । श्लेष्मलो वातपित्तघ्नः स्नेहस्तु मधुरः सरः ॥ ९७ ॥ ' मदे ' प्रोक्तः फलं ' धन्वे ' गुरु स्वादु च पित्तहृत् । बीजं तत्स्वादु पाके च तन्मूलं रक्तपित्तहृत् ॥ ९८ ॥ श्लेष्मकृत्मलकृच्चैव शुक्रकृद्बृंहणं तथा । वातपित्तव्रणहरं तथैव कृमिनाशनं ॥ ९९ ॥ तद्बीजं मूत्रकृत् ' कैये ' ' मदने ' मदकृद्रसः । तदस्थिगुणः संप्रोक्तो पित्तकृद्वातहृत्तथा ॥ २६०० ॥ ३२ श्रीताल । म० श्रीताड, मलबार देशांत प्रसिद्ध; याच्या पानांवर ग्रंथ लिहितात । गु० श्रीताड । श्रीतालो मृदुतालश्च लक्ष्मीतालो मृदुच्छदः । विशा-लपत्रो लेखार्हो मषीलेख्यदलस्तथा ॥ १ ॥ शिरालपत्रकश्चैव याम्योद्भूतस्तु ' राजके ' । लेख्यपत्रस्तथा प्रोक्तो ' धन्वंतरिनिघंटके ' ॥ २ ॥ गुणाः । श्रीतालो मधुरोऽत्यन्तमीषच्चैव कषायकः । पित्तजित्कफकारी च ईष-द्वातकरो ' नृपे ' ॥ ३ ॥ ३३ हिंताल । म० थोर ताड, काटे ताड ।

गु० फांटावालो ताड। हा दक्षिणेंत प्रसिद्ध । हिंतालः स्थूलतालश्च वल्कपत्रो बृहद्दलः। गर्भस्रावी नीलतालो भीषणो बहुकंटकः ॥ ४ ॥ स्थिरपत्रो द्विधालेख्यः शिरापत्रः स्थिरांघ्रिकः। अम्लसारो बृहत्तालो 'राजनामनिघंटके'॥ ५ ॥ गुणाः। हिंतालो मधुराम्लश्च कफकृत्पित्त-दाहनुत्। श्रमतृष्णापहारी च शिशिरोवातहृ 'न्नृपे' ॥ ६ ॥ ३४ माड। म० माड, मेर्लीमाड; कोंकणांत प्रसिद्ध। गु० माड। माडो माडद्रुमो दीर्घो ध्वजवृक्षो वितानकः। मद्यद्रुमो मोहकारी मदद्रु रज्जु 'राजके' ॥ ७ ॥ गुणाः। माडस्तु शिशिरो रुच्यः कषायः पित्तदाहकृत्। तृष्णा-पहो मरुत्कारी श्रमहृच्छ्लेष्मकृ 'न्नृपे' ॥ ८ ॥ ३५ तूला। म० पारसा पिंपळ। कों० भेंडीचें झाड। गु० पारस पीपळो। तूलं तूदं ब्रह्मकाष्ठं ब्राह्मणेष्टं च यूपकं। ब्रह्मदारु सुपुष्पं च सुरूपं नीलवृंतकं ॥ ९ ॥ क्रमुकं विप्रकाष्ठं च मृदुसारं तु 'राजके'। 'धन्वे' तु नूदं संप्रोक्तं ब्रह्मण्यं ब्रह्मचारिण ॥ १० ॥ कपिचूतः कपिवासस्तथैव क्षीरपादपः। कपीतन-स्तथा 'केये' पारीशो 'भावनामके' ॥ ११ ॥ गर्दभांडः कंदरालः कमंडलुः सुपार्श्वकः। मली तु फलिका चैव वानीरो 'गणनामके' ॥ १२ ॥ गुणाः। मधुराम्लं नृपे तूलं वातपित्तहरं सरं। दाहप्रशमनं वृष्यं कषायं कफनाशनं ॥ १३ ॥ 'धन्वे' चैव फलं स्वादु बलवर्णाग्निवृद्धिकृत्। दुर्जरं तु भवेत्स्निग्धं कृमिकृच्छुक्रकृत्तथा ॥१४॥ कफकृ 'त्कैयदेवे' च 'द्रव्यं' वंगविनाशनः ॥ ३६ ॥ तमाल। म० तमालवृक्ष। गु० तमाल। तमालो नीलतालः स्यात्कालस्कंधस्तमालकः ॥१५॥ नीलध्वजश्च तापिच्छः कालतालो महाबलः। 'नृपे' प्रोक्तो 'मदे' चैव लोकस्कंधोऽसि-तद्रुमः ॥ १६ ॥ गुणाः। तमालो मधुरो बल्यो वृष्यश्च शिशिरो गुरुः। कफपित्ततृषादाहश्रमभ्रांतिहरो 'नृपे' ॥ १७॥ विस्फोटशोफहृत्प्रोक्तः 'कैयदेवनिघंटके'। ३७। कदंब। म० कळंब। गु० कदंब, कलम। कदंबो वृत्तपुष्पश्च सुरभिर्ललनाप्रियः ॥ १८ ॥ कादंबर्यः सिंधुपुष्पो मदाढ्यः कर्णपूरकः। 'नृप' प्रोक्तस्तथा 'कैये' कुत्सितांगः कदंबकः ॥१९॥

गोत्रविदर्पी ' कैये ' ' द्रव्ये ' तथैव च । सुतेजनो धनुर्वृक्षो ' माव-नामनिघंटके ' ॥५३॥ गुणाः । धन्वनः कटुकोष्णश्च कषायः कफना-शनः । दाहशोषकरो ग्राही कंठामयहरो ' नृपे ' ॥५४॥ कफपीनस-कासघ्नो रक्तदोषहरो ' द्रवे ' । पित्तानिलहरश्चैव स्वादुरूक्षश्च ' कैय-के ' ॥ ५५ ॥ तत्फलं तु हिमं स्वादु कषायं कफवातहृत् । कफपित्ता-र्शहृच्चैव ' मदे ' ' मावे ' तथा स्मृतः ॥ ५६ ॥ बृंहणो बलकृच्चैव संधि-कृद्व्रणरोपणः । ४६ भूर्जपत्रः । म०, गु० भोजपत्र । भुजो बल्कद्रुमो भूर्जः सुचर्मा भूर्जपत्रकः ॥५७॥ चित्रत्वग्बिंदुपत्रश्च रक्षापत्रो विचित्रकः। भूतघ्नो मृदुपत्रश्च शैलेंद्रस्थस्तु ' राजके ' ॥ ५८ ॥ सुचर्मको बहुपटो मृदुत्वक्च स्थिरच्छदः । बहुवल्कश्चीरपत्रो भूतहा लेख्यपत्रकः॥ ५९ ॥ ' कैये ' प्रोक्तो युग्मपत्रः कूर्चभाक् ' द्रव्यरत्नके ' । बहुचर्मी ' मदे ' ' मावे ' चर्मी बहुलवल्कलः ॥ ६० ॥ चित्रपत्रश्छत्रपत्रो बहुत्वक्च मृदुच्छदः । प्रोक्तो ' गणनिघंटे ' तु ग्रहघ्नो धूपयोगिकः ॥६१॥ गुणाः। भूर्जः कटुकषायोष्णो भूतरक्षाकरः परः । त्रिदोषशमनः पथ्यो दुष्टकौ-टिल्यहा ' नृपे ' ॥ ६२ ॥ पित्तरक्तबलासघ्नः मेदः कर्णरुजापहः । विषव्रणहरः प्रोक्तः ' कैयदेवनिघंटके ' ॥ ६३ ॥ ४७ तिनिश । म० तिवस । गु० मिणोहरमो । तिनिशः स्यंदनश्चक्री रथांगः शकटो रथः। रथिका भस्मगर्भश्च नेमी जलधरो ' नृपे ' ॥ ६४ ॥ सुगर्भको ह्यश्म-गर्भश्चकसंवरणः ' कैये ' । रथद्रुर्वंजुलो ' मावे ' सर्वसारस्तु ' द्रव्यके' ॥ ६५ ॥ अतिमुक्तो वंजुलश्च ' काशे ' तु चित्रकृत्तथा । गुणाः । तिनिशस्तु कषायोष्णः कफरक्तातिसारजित् ॥ ६६ ॥ ग्राहको दाहज-ननो वातामयहरो ' नृपे ' । श्लेष्मपित्तास्रहा प्रोक्तो ' द्रव्यनामनिघं-टके ' ॥ ६७ ॥ चित्रकृद्व्रणकृमिपांडुदाहप्रमेहहा । बलासपित्तमेदोघ्नः ' कैयदेवनिघंटके ' ॥ ६८ ॥ ४८ अर्जुन । म० अर्जुनसादडा । गु० धोळो साजड । अर्जुनः शंबरः पार्थश्चित्रयोधी धनंजयः । वीरांतकः किरीटी च गांडीवी शिवमल्लकः ॥६९॥ सव्यसाची नदीसर्जः कर्णारिः

कुरुवीरकः । कौंतेय इंद्रसूनुश्च वीरद्रुः कृष्णसारथिः ॥ ७० ॥ पृथाजः फाल्गुनो धन्वी ककुभो ' राजनामके '। ' धन्वे ' तु पांडवश्चैव तथा ' कैयनिघंटके ' ॥ ७१ ॥ धूर्तस्तु भूरुहश्चैव मधुगंधप्रसूनकः । मधुगंधः पुष्पफलो ' गणे ' 'द्रव्ये' शठद्रुमः ॥ ७२ ॥ इंद्रद्रुर्वीरवृक्षश्च वीरश्च धवलो ' मदे '। ततो वीरतरुश्चैव प्रोक्त 'स्वमरकोशके' ॥ ७३ ॥ **गुणाः** । अर्जुनस्तु कषायोष्णः कफघ्नो व्रणनाशनः । पित्त-श्रमतृषार्तिघ्नो मारुतामयहा ' नृपे ' ॥ ७४ ॥ ' धन्वे ' पथ्यः क्षते भग्ने रक्तस्तंभनकृद्भवेत् । अस्थिभग्नेऽस्थिसंहारे हितश्चाढ्या-निलापहः ॥ ७५ ॥ वातघ्नो ' द्रव्यरत्ने ' तु पांडुरोगहरो ' गणे '। शीतः पित्तकफघ्नश्च व्रणमेहहरो ध्रुवं ॥ ७६ ॥ स्वरभंग रक्तदोष क्षत-क्षयरुज तथा । हंतीति ' कैयदेवे ' च ' मदे ' रक्तविषापहः ॥ ७७ ॥ **४९ हरिद्रु । म० हळदिवा वृक्ष । गु० हलदरवो ।** हरिद्रुः पीतदारुः स्यात्पीतकाष्ठश्च पीतकः । कदंबकः सुपुष्पश्च सुराह्वः पीतकद्रुमः ॥७८॥ प्रोक्तो ' राजनिघंटे ' तु तथा ' कैयनिघंटके '। श्रीमान् कदंबपुष्पश्च पीतकाष्ठो हरिद्रकः ॥ ७९ ॥ गौरद्रुर्पीतवर्णश्च ' द्रव्ये ' गौरद्रुमो वरः । **गुणाः** । हरिद्रुः शीतलस्तिक्तो मंगल्यः पित्तवातजित् ॥ ८० ॥ अंगकांतिकरो बल्यो नानात्वग्दोषहा ' नृपे '। पाके कटुश्च वीर्योष्णः किंचित्कफविनाशनः ॥ ८१ ॥ ' कैयदेवनिघंटे ' तु हितश्च व्रणरो-पणे । **५० दग्धरुहा । म० रामेठा ।** दग्धा दग्धरुहा प्रोक्ता दग्धिका च स्थलेरुहा ॥ ८२ ॥ रोमशा कर्कशदला भस्मरोहा सुदग्धिका । **गुणाः** । दग्धा कटुः कषायोष्णा कफवातनिकृतनी ॥ ८३ ॥ पित्तप्रको-पनी सा च ' नृपे ' चैवाग्निदीपनी । **५१ शाखोट । म० सागनाहोडा, हेर्दी, हेदू । गु० साहोडा ।** शाखोटो भूतवृक्षश्च पीतोजर्क्षीरनाशनः ॥ ८४ ॥ धूकावासो गवाक्षी च कौशिक्यो भूर्जपत्रकः । ' नृपे ' प्रोक्ता ' मदे ' चैव भूतावासः खरच्छदः ॥ ८५ ॥ ' द्रव्ये ' पीतफलश्चैव छागीक्षीरविनाशनः । **गुणाः** । शाखोटश्चैव तिक्तोष्णः पित्तघ्नातहा

कफवाधीर्यनिघ्नश्च कर्णशूलहरस्तथा । योनिदोषहरः प्रोक्तो वैद्यै- 'र्गणनिघंटके ॥ १९ ॥ ' केये ' तु मधुरस्तिक्तः कषायो रूक्ष एव च । भेदी च पित्तलो दीप्यः कफवातविनाशनः ॥ २० ॥ कफवातास्रहा चैव मूत्राघाताऽश्मरीहरः । हृद्रदघ्नस्तथा प्रोक्तो वैद्यविद्याविशारदैः ॥२१॥ ६० पुत्रजीव । म०, गु० पुत्रजीव । पुत्रजीवः पवित्रश्च गर्भदः सुतजीवकः। कुटजीवोऽपत्यजीवः सिद्धिदोऽपत्यजीवकः ॥ २२ ॥ ' नृपे ' प्रोक्त- स्तथा ' केये ' यष्टिपुष्पोऽर्थसाधकः । ' भावे ' गर्भकरश्चैव प्रोक्तो वैद्य- विशारदैः ॥२३॥ गुणाः । पुत्रजीवो हिमो वृष्यः श्लेष्मदो गर्भजीवदः । चक्षुष्यः पित्तशमनो दाहतृष्णाहरो ' नृपे ' ॥ २४ ॥ श्लेष्मवातहरः प्रोक्तो वैद्यै'र्मदनपालके ' । सृष्टमूत्रमलाघ्नो 'भावे' गुरुकटुः पटुः॥२५॥ ६१ महापिंडीतरु । म० पेंढ्रं । गु० कौडिओ । महापिंडीतरुः प्रोक्तः श्वेतपिंडीतकस्तथा । करहाटः क्षुरश्चैव शस्त्रकोशतरु ' नृपे ' ॥ २६ ॥ पिंडारस्तीक्ष्णकीलश्च ' मदने ' तु कुरंगकः । महापिंडीतकश्चैव कुरंटकः प्रकीर्तितः ॥ २७ ॥ चर्मकारतरुश्चैव प्रोक्तो ' गणनिघंटके ' । गुणाः । पिंडीतरुः कषायोष्णस्त्रिदोषशमनो ' नृपे ' ॥ २८ ॥ चर्मरोगापह- श्चैव विशेषाद्रक्तदोषजित् । स्वादु'र्मदनपाले' तु शीतः शोफहरस्तथ ॥ २९ ॥ कफपित्तहरः प्रोक्तः प्राचीनभिषजांवरैः ६२ कारस्कर । म० कुचला । गु० झेर कोचला । कारस्करस्तु किंपाको विषतिंदुर्विष- द्रुमः ॥ ३० ॥ गरद्रुमो रम्यफलः कुपाकः कालकूटकः । ' राजनाम- निघंटे ' तु कुलकः परिकीर्तितः ॥ ३१ ॥ गुणाः । कारस्करः कटू- ष्णश्च तिक्तः कुष्ठविनाशनः । वातामयास्रकंडूतिकफामार्शोव्रणापहः ॥ ३२ ॥ ६३ कटभी । म० काळी किणही । गु० काळा वापुंगा । कटभी नाभिका शौंडी पारली किणिही तथा । मधुरेणुः क्षुद्रश्यामा फंडर्यः श्यामला 'नृपे' ॥३३॥कटंभरा स्वादुपुष्पी नीलपुष्पी गवादनी ।प्रोक्ता 'केयनिघंटे ' तु वैद्यविद्याविशारदैः॥३४॥ ६४श्वेताकटभी। म० पांढरी किणही। गु०धोळा वापुंगा । सितादिकटभी श्वेता किणिही गिरिकर्णिका ।

शिरीषपत्रा कालिंदी शतपादी विषघ्निका ॥ ३५ ॥ महाश्वेता महाशौंडी महादिकटभी ' नृपे '। श्वेतस्पदा श्वेतपुष्पा श्वेता पाटलिपिडिका ॥ ३६ ॥ क्षुद्रश्वेता श्वेतधामा चोरशुंठी कटभरा । बहुरेणुः शतपदी शौंडिका तृणशौंडिका ॥ ३७ ॥ विषघ्नी लोहिनी चैव सुनाभा चापराजिता । ' कैयदेवनिघंटे ' तु समोक्ता दधिपुष्पिका ॥ ३८ ॥ गुणाः । कटभी तु कटूष्णा च श्वेता तु गुणवत्तथा । शूलगुल्मविषाध्मानवाताजीर्णकफघ्निका ॥ ३९ ॥ ' नृपे ' ' द्रव्ये ' शुक्रला च तथा ' कैयनिघंटके ' । दोषत्रयव्रणग्रंथिनाशनी शीर्षरोगहृत् ॥ ४० ॥ ६५ भूतांकुश । म० भूतकेशी । गु० भूतकेशी । क्षवकः क्षुरकस्तीक्ष्णः क्रूरो भूतांकुशः क्षवः । राजोद्विजनरुज्ञश्च भूतद्रावी तु ' राजके ' ॥ ४१ ॥ क्षुद्रो रनो राजवृक्षः क्षवक ' कैयदेवके ' । गुणाः । भूतांकुशस्तीव्रगंधः कषायोष्णः कटुस्तथा ॥४२॥ भूतग्रहादिदोषघ्नः कफवातहरो ' नृपे ' । अमिकृ' कैयदवे ' तु कुष्ठकृमिहरस्तथा ॥ ४३ ॥त्वग्वातचित्रकुष्ठघ्नः कफघ्नो ' द्रव्यरत्नके '। ६६ देवसर्षप । म० देवशिरस । गु० देवशिरस । देवसर्षपकश्चाक्षो बदरो रक्तमूलकः ॥४४॥ सुरसर्षपकश्चैंद्रस्तथा सूक्ष्मदल स्मृतः । सर्षपा निर्जवादिः स्यात्कुराग्निस्तु ' राजके ' ॥ ४५ ॥ ' कैयदेवनिघंटे ' तु तथा त्रिदशसर्षपः । गुणाः । देवसर्षपनामा तु कटूष्णः कफजतृहा ॥ ४६ ॥ मुखरोगहरो रुच्यः प्राक्तो ' राजनिघंटके ' । शिरोविरेचनकरः कफपित्तानिलापहः ॥ ४७ ॥ कृमिहा ' कैयदेवे ' च प्रोक्तो वैद्यविचक्षणैः । ६७ लकुच । म० क्षुद्रफणस ' ओटीचें झाड, आजण । गु० लकुच, ओटफळ । लकुचो लिकुचः शालः कषायी दृढवल्कलः ॥ ४८ ॥ दृढः कार्यश्च शूरश्च स्थूलस्कंधस्तु ' राजके ' । तथैव क्षुद्रपनसो 'द्रव्य' तु ग्रथिमत्फल ॥ ४९ ॥ पीतनाशो ग्रथिलः पनसः क्षुद्रसारित । ' कैयदेवनिघंटे ' तु प्रोक्तो वैद्यविशारदैः ॥ ५० ॥ गुणाः । लकुचः स्वरसे तिक्तः कषायोष्णो लघुस्तथा । मदोषहरो ग्राही मलसंग्रहकृन्नृपे ॥५१॥ ' मदे ' तु गुरु विष्टंभी स्याद्म्ल रक-

पित्तकृत् । श्लेष्मकारि समीरघ्नं तथा शुक्राग्निनाशनं ॥ ५२ ॥ हृद्रोगकृमिहृत्प्रोक्त 'कैयदेव निघंटके'। 'भावे 'सुपक्व मधुरमम्ल वातनिलपित्तहृत्॥५३॥ रुच्यं वृष्य तथा पक्व गुरु रक्तत्रिदोषकृत्। नेत्रयोरहितं प्रोक्त वैद्यविद्याविशारदैः ॥ ५४ ॥ ६८ विकंकत । म० गुलघोंटी, वेहकळ । गु० विकळो । विकंकतो व्याघ्रपादो ग्रथिलः स्वादुकंटक । कटपादो बहुफलो गोपघोंटा सुवद्रुमः ॥ ५५ ॥ मृदुफलो दतकाष्ठो यज्ञियो ब्रह्मपादपः । पिंडरोहिणकः पीतः किंकिणी ' राजनामके ' ॥ ५६ ॥ गोपघंटः काकपादो ' धन्वतरिनिघटके ' । सुरद्रुमो देववृक्षस्तथैव यज्ञपादपः ॥ ५७॥ पृथुबीजः पिंडरोहः 'कैयदेवनिघटके'। ' द्रव्ये ' तु कटकश्चैव 'भावे' च व्याघ्रपात्तथा ॥ ५८ ॥ कंडकी यज्ञवृक्षश्च ' मदे ' देवतरुस्तथा । स्रुवावृक्षः स्रुवतरुस्तथैव वरसज्ञकः ॥ ५९ ॥ **गुणाः** । विकंकतोऽम्लो मधुरः पाकेऽतिमधुरो लघुः । दीपनः कामलास्रघ्न. पाचनः पित्तहा ' नृपे ' ॥६०॥शीतस्तिक्तः कफघ्नश्च 'धन्वे' तु शोफनाशनः।' द्रव्ये ' तु दाहहा चैव मलघ्नो ' गणनामके ' ॥ ६१ ॥ इति मभद्रादिवर्गः ॥

## ८ करवीरादिवर्गः ।

१ **श्वेतकरवीर** । म० पांढरी कण्हेर । **गु०** धोळी कणेर । करवीरो महावीरो हयमारोऽश्वमारकः । हयघ्नः प्रतिहासश्च शतकुंदोऽश्वरोधकः ॥ ६२ ॥ हयारिर्वीरकः कुव. शकुदः श्वेतपुष्पकः । अश्वांतकस्तथाऽश्वघ्नो नखराव्होऽश्वनाशकः ॥ ६३ ॥ स्थूलादिकुंद. प्रोक्तो दिव्यपुष्पो हरिप्रियः। गौरीपुष्पः सिद्धपुष्पो ' राजनामनिघटके '॥ ६४ ॥ ' धन्वे ' चाश्वमोहकश्च घोटघ्ना ' गणनामके ' । तथैव शतप्रासश्च ' कोशे ' प्रोक्तो भिषग्वरैः ॥ ६५ ॥ **गुणाः** । करवीरः कटुस्तीक्ष्णः कुष्ठकंडूतिनाशनः । व्रणार्तिविषविस्फोटशमनोऽश्वमृतिप्रदः ॥ ६६ ॥ २ **रक्तकरवीर** । म० तांबडी कण्हेर । गु० राती कणेर । रक्तकरवीरकश्चैव रक्तप्रसव एव च । गणेशकुसुमश्चैव चडीकुसुम एव च ॥६७॥

क्रूरस्तु मूतद्रावी च रविप्रियस्तु 'राजके'। चंडातको रक्तपुष्पश्चडको लगुडस्तथा ॥६८॥ प्रचंडो गुल्मको 'धन्वे' चंडातो 'भावनामके'। चंडालकश्च चंडालो मूतहारी 'गणे' स्मृतः ॥६९॥ गुणाः। रक्तस्तु करवीरः स्यात्कटुस्तीक्ष्णो विशोधकः। त्वग्दोषव्रणकंडूतिविषकुष्ठहरो 'नृपे' ॥ ७० ॥ ३ पीतकरवीर। म० पिंवळी कण्हेर। गु० पीळी कणेर। पीतकरवीरकश्चैव पीतप्रसव एव च। सुगंधिकुसुमश्चैव प्रोक्तो 'राजनिघंटके' ॥ ७१ ॥ ४ कृष्णकरवीर। म० काळी कण्हेर। गु० काळी कणेर। कृष्णकरवीरकश्चैव तथा कृष्णप्रसूनकः। कृष्णस्तु कृष्णकुसुमो गुणैस्तुल्यश्चतुर्विधः ॥ ७२ ॥ 'धन्वतरी' तु वीर्योष्णश्चक्षुष्यो ज्वरहा स्मृतः। भक्षण विषवत्प्रोक्तं वैद्ये 'मदनपालके' ॥ ७३ ॥ ५ श्वेतधत्तूर। म० पाढरा धोतरा। गु० धोळो धतुरो। धत्तूरः कितवो धूर्त उन्मत्तः कनकाह्वयः। शठो मातुलकः श्यामो मदनः शिवशेखरः ॥ ७४ ॥ खर्जूघ्नः काहलापुष्पः खलः कंटफलस्तथा। मोहनः फलभो मत्तः शैवश्च 'नृपनामके' ॥ ७५ ॥ कनको देवता चैव कलिश्च हरवल्लभः। मदकारस्तथा 'धन्वे' 'मदे' तूरी तु मातुलः ॥ ७६ ॥ तरलश्च तथा 'भावे' धुस्तुरो देविता स्मृतः। महामोहीति विख्याता "पुले मातुलपुत्रकः" ॥ ७७ ॥ गुणाः। धत्तूरो मणहारी च कटूष्णो भ्रमकांतिदः। त्वग्दोषखर्जुकंडूतिज्वरहारी तु 'राजके'॥७८॥ अग्निवांतिकरश्चैव मदकृद्'द्रव्यनामके'। वातकृत् विषकुष्ठादियूकालिक्षाविनाशकः ॥ ७९ ॥ कफनाशकरश्चैव 'भावनामनिघंटके'। ६ कृष्णधत्तूर। म० काळा धोत्रा। गु० काळो धतुरो। कृष्णधत्तूरकः सिद्धः कनकः सचिवः शिवः ॥ ८० ॥ कृष्णपुष्पो विषारातिः क्रूरो धूर्तश्च 'राजके'। ७ राजधत्तूर। म० राजधोत्रा। गु० राजधंतुरो। राजधत्तूरकश्चैव राजधूर्तो महाशठः ॥ ८१ ॥ निर्स्रणपुष्पको भ्रान्तो राजस्वर्णस्तु 'राजके'। सितनीलकृष्णलोहितपीतप्रसवाश्च सन्ति धत्तूराः। सामान्यगुणोपेतास्तेषु गुणाढ्यस्तु कृष्णकुसुमःस्यात् ॥ ८२॥ ८ कांदि-

दार । म० फोरल, कोंकणांत प्रसिद्ध । गु० चंपाकाटी । कोविदारः काचनारः कुद्दालः कनकारक. ॥ ८३ ॥ कांतपुष्पश्च करकः कानारो यमलच्छदः । पीतपुष्पः सुवर्णारो गिरिजः काचनारकः ॥ ८४ ॥ युग्मपत्रो महापुष्पो ' राजनामनिघंटके '। ' धन्वे ' कुली चमरिको महायमलपत्रकः ॥ ८५ ॥ कुडली ' कैयदेवे ' तु कुद्दलोद्दालकौ मतः । स्वल्पकेसरसंज्ञश्च तथैव स्वल्पकेसरी ॥ ८६ ॥ तथा च शोणफलिनी प्रोक्ता वैद्यविशारदैः । गुणाः । कोविदारः कषायः स्यात्संग्राही व्रणरोपणः ॥८७॥ दीपनः कफवातघ्नो मूत्रकृच्छ्रहरो ' नृपे ' । गडमालागुदभ्रंशशमनः कफपित्तहा ॥ ८८ ॥ ' धन्वे ' च कृमिकुष्ठघ्नो ' कैये ' पुष्प हिम गुरु। रक्तपित्तप्रदरघ्न क्षतकासनिवारण ॥ ८९ ॥ श्वासघ्न गुदरोगघ्न प्राक्त • ' द्रव्यनिघंटके '। ९ अर्क। म० लाल रुई । गु० रातो आकडो । अर्कः क्षीरदलः पुष्पी प्रतापः क्षीरकाण्डकः ॥९०॥ विक्षीरो भास्करः क्षीरी खर्जुघ्नः शिवपुष्पकः। जम्भलः क्षीरपर्णी स्यात्सविता च विकीरणः ॥ ९१ ॥ सूर्याह्वश्च सदापुष्पो रविरास्फोटकस्तथा । तूलफलः शुकफलो ' राजनामनिघंटके ' ॥९२॥ क्षतक्षीरी तथा प्रोक्तो 'गणनामनिघंटके '। गुणाः। अर्कस्तु कटूष्णश्च वातजिद्दीपनीयकः ॥ ९३ ॥ शोफव्रणहरः कडूकुष्ठकृमिहरो ' नृपे ' । सरः प्लीहोदरघ्नश्च प्रोक्तो ' धन्वंतरी ' भुव ॥९४॥ विष्मुल्मार्शोघ्नः शोफोदरहरो ' मदे ' । श्लेष्मोदरविनिघ्न च तत्पुष्प वृष्यमेव च ॥ ९५ ॥ दीपन पाचन चैव अरोचकहर तथा । प्रसेकश्वासकासघ्न माखुदोषहर भुव ॥ ९६ ॥ रक्तपित्तहरो ' भावे ' विरेचककरः स्मृतः। १० श्वेतार्क । म० पांढरी रुई । गु० धोळो आकडो । शुक्लार्कस्तपनः श्वेतः प्रतापश्च सितार्ककः ॥ ९७ ॥ सुपुष्पः शंकरादि स्यादलर्को वृत्तमल्लिका । गुणाः । श्वेतार्कः कटुतिक्तोष्णो मलशोधनकारकः ॥९८॥ मूत्रकृच्छ्रासशोफार्तिव्रणदोषहरो ' नृपे ' । ११ राजार्क । म० लाल मादार । गु० राता मदार । राजार्को वसुकोलर्को मदारो गणरूपकः ॥ ९९ ॥ काष्ठीलश्च सदापुष्पो ' राजनामनिघंटके '। ' धन्वे ' त्वलर्कस-

श्च एकाष्ठीलः प्रतापनः ॥ २८०० ॥ गुणाः । राजार्कः कटुतिक्तोष्णः
कफमेदोविषापहः । वातकुष्ठव्रणान्हन्ति शोफकंडूविसर्पनुत् ॥ १ ॥ नृपे '
' द्रव्ये ' प्लीहगुल्मोदराध्मानहरस्तथा । १२ श्वेतमंदार । म० पांढरा
मांदार । गु० धोळो मंदार । श्वेतमंदारकश्चैव पृथ्वीकुरबकस्तथा ॥ २ ॥
दीर्घपुष्पः सितालर्को दीर्घायुर्कस्तु ' राजके ' । गुणाः । श्वेतमंदारको
ऽत्युष्णस्तिक्तो मलविशोधनः ॥ ३ ॥ मूत्रकृच्छ्रव्रणान्हन्ति कृमीनत्य-
न्तदारुणान् । १३ सुरपुन्नाग । म० सुरंगी, गोंडी उंडी । गु० सोरंगी ।
नमेरुः सुरपुन्नागः सुरेष्टः सुरपर्णिका ॥ ४ ॥ सुरतुंगो ' राजनाम्नि '
पुन्नागगुणसंयुतः । १४ रक्तपलाश । म० तांबडा पळस । गु० रातो
खाखरो । पलाशः किंशुकः पर्णो वातपोथोऽथ याज्ञिकः ॥५॥ त्रिपर्णो
वक्रपुष्पश्च पूतद्रुर्ब्रह्मवृक्षकः । ब्रह्मोपनेता काष्ठद्रु ' नृपनामनिघंटके ' ॥ ६ ॥
क्षारश्रेष्ठो रक्तपुष्पो बीजस्नेहः समिद्वरः । त्रिवृंतश्च तथा ' धन्वे ' ' द्रव्ये '
कर्मी प्रकीर्तितः ॥ ७ ॥ ब्रह्मपादपसंज्ञस्तु ' मदे ' च समिदुत्तमः ।
याज्ञिकश्च वातहरः प्रोक्तो ' भावप्रकाशके ' । ८ गुणाः । पलाशस्तु
कषायोष्णः कृमिदोषविनाशनः । तद्बीजं कंडूपामादिदद्रुत्वग्दोषनाशकृत्
॥ ९ ॥ तस्य पुष्पं च सोष्णं च कंडूकुष्ठार्तिनाशनम् । रक्तः पी : सितो
नीलः कुसुमैस्तु विभज्यते ॥ १० ॥ किंशुकैर्गुणतास्पेऽपि
सितो वि[illegible]नदो ' नृपे ' । सरः संधानकृद्वृष्यं पुष्पं ग्राहि च शीतलं ॥ ११ ॥
वातलं ' कैयदेवे ' तु कृच्छ्रघ्नं ' द्रव्यरत्नके ' । वातरक्तहरं प्रोक्तं वैद्ये-
' र्भावप्रकाशके ' ॥ १२ ॥ क्षारश्रेष्ठश्च सग्राही दीपनः प्लीहगुल्महा ।
वातश्लेष्मार्शोग्रहणीनाशनो ' धन्वनामके ' ॥ १३ ॥ तत्फलं तु तृट्दा-
हघ्नं कफपित्तास्रकुष्ठहृत् । मेहोदरहरं ' कैये ' कृमिशूलहरं तथा ॥ १४ ॥
भग्नसंधानकृच्चैव प्रोक्तं ' मदनपालके ' । १५ पुन्नाग । म० उंडी ।
गु० पुन्नाग । पुन्नागः पुरुषस्तुंगः पुन्नामा पाटलः पुमान् ॥ १५ ॥
रक्तपुष्पो रक्तरेणुररुणो ' राजनामके ' । कामुकः षट्पददलस्तथैव षट्-
पदप्रियः ॥ १६ ॥ ' द्रव्ये ' प्रोक्तो ' मदे ' चैव केसरः षट्पदालयः ।

ताम्रपल्लवः ॥ ५० ॥ पिंडपुष्पो गंधपुष्पो मंजरी ' द्रव्यरत्नके '। वीतशोको ' गणे ' चैव समोक्तो वेयनायकः ॥ ५१ ॥ **गुणाः** ॥ अशोकः शिशिरो हृद्यः पित्तदाहश्रमापहः । गुल्मशूलोदराध्माननाशन. कृमिहा ' नृपे ' ॥ ५२ ॥ तृषापचीशोपहा च विषरक्तहरो ' भंव ' । **२१ चंपक** । म० सोनचाफा । गु० पीळो चंपो, रायचंपो । चंपकः स्वर्णपुष्पश्च चाम्पेयः शीतलच्छदः ॥ ५३ ॥ सुभगो भृंगमोही च शीतलो भ्रमरातिथि. । सुरभिर्दिव्यपुष्पश्च स्थिरगंधोऽतिगंधकः ॥ ५४ ॥ स्थिरपुष्पो हेमपुष्पः पीतपुष्पस्तथाऽपरः । हेमाह्वः सुकुमारस्तु वनदीपस्तु ' राजके ' ॥ ५५ ॥ ' धन्वंतरिनिघंटे ' तु कांचनः षट्पदातिथिः । तथा ' मदनपाले ' तु चलो रम्यः मकीर्तितः ॥ ५६ ॥ तत्कालिका गंधफली सप्रोक्ता गंधमोदिनी । बहुगंधा तथा ख्याता ' राजनामनिघंटके ' ॥ ५७ ॥ **गुणाः** । चंपकः कटुकस्तिक्तः शिशिरो दाहनाशन. । कुष्ठकण्डूव्रणहरो गुणाढ्यो ' राजनाम्नि च ॥५८॥ वातपित्तहरो ' धन्वे ' ' मदे ' पित्तकफासहा । ' भावे ' तु कफवातघ्नः पित्तघ्न' परिकीर्तितः ॥ ५९ ॥ **२२ नागचंपक** । म० नागचाफा । गु० नागचंपो । क्षुद्रचंपकसंज्ञस्तु नागचंपक एव च । फणिचंपकस्तु सप्रोक्तो नागाह्वश्चंपको मतः ॥ ६० ॥ वनचंपकसंज्ञस्तु ' राजनामनिघंटके ' । **गुणाः** । वनचंपकः कटूष्णो वातकफघ्नो वर्ण्यः ॥ ६१ ॥ चक्षुष्यो व्रणरोपी वह्निस्तम्भं करोति योगगुणात् । चंपकविशेषगुणाः । चंपकप्रसवमिष्टसुगंध भूसुरामरमहीपतियोग्य ॥६२॥ वातपित्तशमनं च सुगंधि स्वर्णवर्णमपि षट्पदधाति । **२३ बकुल** । म० बकूळ । कों० ओवळ । गु० बोलसरी । बकुल. सीधुगंधश्च स्त्रीमुखमधुदोहदः ॥ ६३ ॥ सुरभिर्मधुपुष्पश्च भ्रमरानंद एव च । केसरः स्थिरकुसुमो धन्वी शारदिकस्तथा ॥ ६४ ॥ करक' सीधुसंज्ञश्च गूढपुष्पो विशारद' । मद्यामोदश्च मदनश्चिरपुष्पस्तु ' राजके ' ॥ ६५ ॥ मधुगंधो मद्यगंधः सिंहः सिंहकेसरकः । शीर्षको ' धन्वकोशे ' तु गवाढ्यो ' गणनामके ' ॥ ६६ ॥

शारदिका शारदश्च दोहली सीधुपुष्पकः। **गुणाः**। बकुलं शीतलो हृद्यो विषदोषविनाशनः ॥ ६७ ॥ मधुरश्च कषायश्च मदाढ्यो हर्षदो 'नृपे'। तथा च—बकुलकुसुमं च रुच्यं क्षीराढ्यं सुरभि शीतलं मधुरं ॥ ६८ ॥ स्निग्धकषायं कथितं मलसंग्राहकं चैव। 'धन्वे' सुगंधिकं पुष्पं सुपक्वं कथितं पुनः ॥ ६९ ॥ *स्थिरीकरं च दंताना विशदं तत्फलं गुरु। वातलं कफपित्तघ्नं 'मदने' तु प्रकीर्तितं ॥ ७० ॥*

**२४ केतकी**। म० श्वेत केवडा। गु० केवडो। केतकी तीक्ष्णपुष्पा च विफला धूलिपुष्पिका। मेध्या पट्टदला चैव शिवद्विष्टा नृपप्रिया ॥ ७१ ॥ क्रकचा दीर्घपत्रा च स्थिरगंधा तु पांसुला। गंधपुष्पेंदुकलिका दलपुष्पा तु 'राजके' ॥ ७२ ॥ 'धन्वे' तु सूचिकापुष्पो जंबूकः क्रकचच्छदः। 'भावे' तु केतकः प्रोक्तो 'द्रव्ये' सूचिकपुष्पिका ॥ ७३ ॥ **२५ सुवर्णकेतकी**। म० सोनकेवडा, केतकी। गु० सोनकेवडो। *स्वर्णादिकेतकी स्वन्या ज्ञेया सा हेमकेतकी। कनकं प्रसवा पुष्पी हिमा छिन्नरुहा तथा ॥ ७४ ॥ विटरुहा स्वर्णपुष्पी कामखड्गदला 'नृपे'। 'धन्वंतरौ' तु संप्रोक्ता लघुपुष्पा सुगंधिनी ॥ ७५ ॥* **गुणाः**। *केतकीकुसुमं वर्ण्यं केशदौर्गंध्यनाशनं। हेमाभं मदनोन्मादवर्धनं सौख्यकारि च ॥ ७६ ॥ तस्य स्तनोऽतिशिशिरः कटुः पित्तकफापहः। रसायनकरो बल्यो देहदार्ढ्यकरो 'नृपे' ॥ ७७ ॥ श्लेष्महा विषहा प्रोक्ता केसरो स्निग्धकटुहा। फलं तु स्वादु मेहघ्नं कफवातहरं 'द्रवे' ॥ ७८ ॥* **२६ सिंदूरी**। म० शेंदरी। गु० सिंदूरी। सिंदूरी वीरपुष्पी च तृणपुष्पी करच्छदः। सिंदूरपुष्पी *शोणादिपुष्पी तु 'राजनामके' ॥ ७९ ॥ 'मदने' रक्तबीजा स्याद्रक्तपुष्पा सुकोमला। 'द्रव्यरत्नाकरे' चैव संप्रोक्ता रक्तपुष्पिका॥८०॥* **गुणाः**। सिंदूरी कटुका तिक्ता कषाया श्लेष्मवातजित्। शिरोर्तिशमनी भूतनाशा चंडीप्रिया 'नृपे' ॥ ८१ ॥ 'मदे' तु रक्तपित्तघ्नी तृष्णावातिहरा हिमा। **२७ जाती**। म० जाई। गु० जाई, साइली, लवारो।

वैद्यनायकैः ॥१३॥ गुणाः । नवमल्लिकाऽतिशैत्या सुरभिः सर्वरोगहृत्। " नृपे " ' धन्वे ' वातपित्तनेत्ररोगहरस्तथा ॥ १४ ॥ वीर्ये चोष्णा रसे तिक्ता मुखरोगहरा ' मदे ' । लघुर्दोषत्रयघ्नी च कर्णरोगहरा ध्रुवं ॥ १५ ॥ २६ अतिमुक्त। म० रायनवाळी। गु० रायनेवरी। अतिमुक्तः पुंड्रकश्च कामकांता तदुत्तरं । मदनी भ्रमरानंदा ' राजनामनिघंटके ' ॥ १६ ॥ तथा ' गणनिघंटे ' तु वयःक्रांतः पराश्रयः । कार्मुको मंडनश्चैव माधवी भ्रमरोत्सवः ॥ १७ ॥ अविमुक्तः सुवसतो ' धन्वंतरिनिघंटके '। गुणाः। अतिमुक्तः कषायः स्याच्छिशिरः श्रमनाशनः॥१८॥ पित्तदाहज्वरोन्मादहिक्काच्छर्दिहरो ' नृपे '। ३७ यूथिका । म० पांढरी जुई। गु० धोळी जुई। यूथिका गणिकांऽबष्ठा मागधी बालपुष्पिका ॥ १९ ॥ मोदनी बहुगंधा च भृंगानंदा तु ' राजके '। गुणोज्ज्वला पुष्पगंधा कर्णिका चारुयूथिका ॥ २० ॥ ' धन्वे ' प्रोक्ता तथा ' द्रव्ये ' लता यूथी प्रकीर्तिता । शिखंडी पांडुरा कुंडी ' गणे ' प्रोक्ता भिषग्जनैः ॥ २१ ॥ २८ हेमयूथिका । म० पिंवळी जुई, सोनजुई । गु० पीळी जुई। सुवर्णयूथिका चैव सुगंधा हेमयूथिका । युवतीष्टा व्यक्तगंधा शिखंडी नागपुष्पिका ॥ २२ ॥ हरिणी पीतयूथी च पीतिका कनकप्रभा । मनोहरा च गंधाढ्या पुण्यगंधा ' नृपे ' ' द्रव्ये '॥ २३ ॥ गणिका चारुमोदा च ' धन्वे ' तु स्वर्णयूथिका। प्रत्यग्रगंधा युवती यूथिका, ' गणनामके ' ॥ २४ ॥ गुणाः । यूथिकायुगुल स्वादु शिशिर शर्करान्वितं । पित्तदाहतृषाहारी नानात्वग्दोषनाशनं ॥ २५ ॥ सितपीतनीलमेचकनामान्वः कुसुमेन यूथिकाः कथिताः । विकाहिमपित्तकफामयज्वरघ्नो व्रणादिदोषहराः ॥ २६ ॥ सर्वासा यूथिकानां तु रसवीर्यादिसाम्यता । सुरूपा तु सुगधाढ्या स्वर्णयूथी तु ' राजके ' ॥२७॥ ' धन्वे ' तु शंखधवला शखयूथीति कथ्यते । वातासमुखदोषघ्नी ' द्रव्यरत्नाकरे ' स्मृता ॥ २८ ॥ मूर्धाक्षिरोगवातघ्नी प्रोक्ता ' मदनपालके ' । कफवातहमित्युक्तं दतरोगविषापह ॥ २९ ॥ रक्तव्रणहर प्रोक्त वैद्यै ' भाव-

प्रकाशके'। ३९ कुब्जक। म० कुब्ज, कोंकणांत प्रसिद्ध। गु० कुंजडा। कुब्जको भद्रतरणी वृत्तपुष्पोऽतिकेसरः ॥ ३० ॥ महासहः कंटकाढ्यः खर्वोऽलिकुलसंकुलः। गुणाः। कुब्जकः सुरभिः शीतो रक्तपित्तकफापहः ॥ ३१ ॥ पुष्पं तु शीतलं वर्ण्यं दाहघ्नं रक्तपित्तजित्। 'नृपे' 'धन्वे' कषायस्तु स्वादुश्चैव रसायनः ॥ ३२ ॥ त्रिदोषशमनो वृष्यस्तथा संग्रहणः परः। ४० मुचुकुंद। म०, गु० मुचकुंद। बहुपत्रो मुचुकुंदो सुदलो हरिवल्लभः ॥ ३३ ॥ रक्तप्रसवश्चार्घ्यार्हो लक्ष्मणकः सुपुष्पकः। मनोरमो महामोहो महामोदश्च 'द्रव्यके' ॥ ३४ ॥ 'मदने' तु क्षत्रवृक्षश्चिबुकः प्रतिविष्णुकः। तथा 'भावप्रकाशे' तु चित्रकः परिकीर्तितः॥ ३५ ॥ गुणाः ॥ मुचुकुंदः कटुतिक्तः कफकासविनाशनश्च कंठकरः। त्वग्दोषशोफशमनो व्रणपामाविनाशनश्चैव ॥ ३६॥ 'नृपे'। 'भावे' शिरःपीडापित्तास्रविषनाशनः'। ४१ करुणी। म० करवीरणी, कोंकणांत प्रसिद्ध। गु० करवीरणी। करुणी ग्रीष्मपुष्पी स्याद्रक्तपुष्पी च वारुणी ॥ ३७ ॥ राजप्रिया राजपुष्पी सूक्ष्मा च ब्रह्मचारिणी। गुणाः। करुणी कटुतिक्तोष्णा कफमारुतनाशिनी ॥ ३८॥ आध्मानविषविच्छर्दिजन्मूर्च्छश्वासहारिणी। ४२ माधवी। म०, गु०. माधवी। माधवी चंद्रवल्ली च सुगंधा भ्रमरोत्सवा ॥ ३९ ॥ भृंगप्रिया भद्रलता भूमिमंडपभूषणी। प्रोक्ता 'राजनिघंटके' तु तथा 'मदनपालके' ॥ ४० ॥ मंडपश्चैव कामी च पुष्पेंद्रो शिष्टगंधिका। गुणाः। माधवी कटुका तिक्ता कषाया मदगंधिका ॥ ४१ ॥ पित्तकासव्रणान्हन्ति दाहशोषहरा 'नृपे'। ४३ गणिकारी। म०, गु० गणेरी, कोंकणांत प्रसिद्ध। गणिकारी कांचनिका कांचनपुष्पी वसंतदूती च ॥४२॥ गंधकुसुमातिमोदा वासंती मदमादिनी चैव। प्रोक्ता 'राजनिघंटे' तु तथा 'मदनपालके' ॥ ४३ ॥ गणरुकः कर्णिकारः कर्णी च गणिकारिका। गणरुका पीतपुष्पा कर्णिका 'द्रव्यरत्नके' ॥ ४४ ॥ तथा 'गणनिघंटे' तु प्रोक्ता कनकपुष्पिका। गुणाः। गणिकारी सुरभि-

गु० मोटो शेवती गुलाब । महती राजतरणी अम्लानो वर्ण्यपुष्पकः । सुपुष्पः सुवर्णपुष्पो महासहामिलातकः ॥ ७७ ॥ ' नृपे ' तु देवतरणी बृहत्पुष्पा तु ' धन्वके ' । महाकुमारी संप्रोक्ता ' भावनामनिघंटके ' ॥ ७८ ॥ गुणाः । ' नृपे ' तु राजतरणी कषाया कफकारिणी । चक्षुष्या सर्वदा हृद्या सुरभिः सुरवल्लभा ॥ ७९ ॥ ५३ **रक्ताम्लान** । म० रक्तकोरांटा, अबोली । गु० रातो कांटा अशेलीयो । रक्ताम्लानो रक्तसहश्चापरिम्लानकस्तथा । रक्तामलातकश्चैव रक्तप्रसव एव च ॥ ८० ॥ मधूत्सवः कुरबको रामालिंगनकामुकः । रागप्रसवकश्चैव सुभगः प्रसवस्तथा ॥ ८१ ॥ तथैव भ्रमरानंदो ' राजनामनिघंटके ' । महासहा तु कुरवो रक्ताम्लातक एव च ॥ ८२ ॥ अम्लानो रक्तपुष्पः स्याच्छोणझिंटी तथैव च । रक्तझिंटी कंटकिनी पर्णाढ्यः शोणझिंटिका ॥ ८३ ॥ वर्णपुष्पस्तथा प्रोक्तो वैद्यविद्याविशारदैः । गुणाः । रक्ताम्लानः कटूष्णः स्याद्वातशोफज्वरप्रणुत् ॥ ८४ ॥ शूलाध्मानहरो वर्ण्यः श्वासकासहरो ' नृपे ' ५४ **पीताम्लान** । म० पिवळा कोरांटा । गु० पीळो कांटा अशेलीयो । पीतस्तु किंकिरातस्यात्पीताम्लानः कुरंटकः ॥ ८५ ॥ कनकः पीतकुरवः सुपीतकुसुमस्तथा । सुपीतश्चैव संप्रोक्तो ' राजनामनिघंटके ' ॥ ८६ ॥ सहाचरः सहचरः पुरः सहचरी मता । कुरंटकः कुरंटः स्यात्प्रोक्तो वैद्यविशारदैः ॥ ८७ ॥ गुणाः । किंकिरातः कषायोष्णस्तिक्तश्च कफवातजित् । दीपनः शोफकंडूतिरक्तत्वग्दोषहा ' नृपे ' ॥ ८८ ॥ ५५ **नीलाम्लान** । म० निळा कोरांटा, बाणपुष्पी । गु० नीळो कांटा अशेलीयो । नीलपुष्पा तु सादासी नीलाम्लानस्तु छादनः । बला चार्तगला चैव नीलपुष्पस्तु ' राजके ' ॥ ८९ ॥ बाणा बाणी बाणपुष्पो बाणो नीलकुरंटकः । स्यान्नीलकुसुमा नीलाझिंटी नीलप्रसूनका ॥ ९० ॥ स्यात्कंटार्तगला प्रोक्ता राजसैरेयकस्तथा । तथा त्वोदनपाकी स्यात्संप्रोक्तः केशरंजनः ॥ ९१ ॥ गुणाः । आर्तगला कटुस्तिक्ता कफमारुतशूलनुत् । कंडूकुष्ठव्रणान्हन्ति शोफत्वग्दोषहा 'नृपे' ॥९२॥

[ अत्र कंटार्तगला वन्या नीलझिंटी ( रान निळा कोरांटा )इति ज्ञेया। तथा च शोणी फुरवकनाम्नी, कंटकिनी, शोणझिंटिका ( रान अबोली, रान रक्तकोरांटा ) इति ज्ञेया ] ५६ कंटकुरंट। म० पिवळा रानकोरांटा। गु० जंगली पीळो कांटा अशेलीयो। कंटकुरंटकः कंटझिंटी वन्या सहाचरी। गुणाः। झिंटिकाः कटुकास्तिक्ता दंतशूलामयापहाः॥९३॥ कफवातहराश्चैव शोफकासहरास्तथा। त्वग्दोषनाशकारिण्यः प्रोक्ता 'राजनिघंटके'। ॥९४॥'कैये' तु मधुरः स्निग्धस्तिक्तोष्णः केशरंजनः।कुष्ठकंडूविषघ्नश्च संप्रोक्तो वैद्यनायकैः ॥९५॥ हिमस्तिक्तस्तुवरोनिघ्नो दाहहा केशवर्धनः। बल्यो वृष्यस्त्रिदोषघ्नो ' धन्वंतरिनिघंटके ' ॥९६॥ वातास्रकफहा प्रोक्तो ' द्रव्यरत्नाकरे ' तथा। ५७ उट्रकांडी। म० उताटी। गु० उताटी। उत्तकांडी रक्तपुष्पी ज्ञेया करभकांडिका ॥ ९७॥ रक्ता लोहितपुष्पी च वर्णपुष्पी तु ' राजके '। गुणाः। उट्रकांडी तु तिक्तोष्णा रुच्या हृद्रोगहारिणी॥ ९८ ॥तद्वीजं मधुरं शीतं वृष्यं संतर्पणं ' नृपे '। ५८ पिंडीतगर। म० पिंडीतगर। कों० अनंत। गु० पिंडीतगर। तगरं कुटिलं वक्रं विनम्रं कुंचितं नतं ॥ ९९ ॥ शठं च नहुषाख्यं च दद्दहस्त च बर्हणं। पिंडीतगरकं चैव पार्थिवं राजहर्षणं ॥२०००॥ कालानुसारकं क्षत्रं दीनं जिह्मं तु ' राजके '। कालानुसार्यमनृगु 'धन्वे' तु नहुष नृपं ॥ १ ॥ बर्हिणं ' कैयदेवे ' तु ' मदे ' च महोरगं। कालानुसारिणी चक्रं संप्रोक्तं ' गणनामके ' ॥ २ ॥ गुणाः। तगरं शीतलं तिक्तं दृष्टिदोषविनाशनं। भूतोन्मादहरं पथ्यं विषघ्नं ' राजनामके ' ॥ ३ ॥ स्निग्धं दोषत्रयघ्नं स्याच्छिरोरोगहरस्तथा। अपस्मारहरं प्रोक्तं ' धन्वंतरिनिघंटके ' ॥ ४ ॥ ५९ दमनक। म० दवणा। गु० डमरो। दमनो दमनकः स्याद्दान्तो गंधोत्कटोमुनिः। पुंडरीको ब्रह्मजटा जटिलः पांडुरागकः ॥५॥ पुत्रः पवित्रको दर्धी विनीतो देवशेखरः। तथा तपस्विपुत्रः स्यात्पोत्कस्तापसपुत्रकः ॥ ६ ॥ कुलपुत्रश्च संप्रोक्तो ' राजनामनिघंटके '। 'धन्वतरिनिघंटे' स्यात्पत्री ऋषिपुत्रकः ॥ ७ ॥

गु० मोटो शेवती गुलाब । महती राजतरणी अम्लानो 'वर्ण्यपुष्पकः। सुपुष्पः सुवर्णपुष्पो महासहामिलातकः ॥ ७७ ॥ 'नृपे' तु देवतरणी बृहत्पुष्पा तु 'धन्वके'। महाकुमारी संप्रोक्ता 'भावनामनिघंटके' ॥ ७८ ॥ **गुणाः** । 'नृपे' तु राजतरणी कषाया कफकारिणी। चक्षुष्या सर्वदा हृद्या सुरभिः सुरवल्लभा ॥ ७९ ॥ ५३ **रक्ताम्लान** । म० रक्तकोरांटा, अबोली । गु० रातो कांटा अशेलीयो । रक्ताम्लानो रक्तसहश्चापरिम्लानकस्तथा । रक्तामलांतकश्चैव रक्तप्रसव एव च ॥ ८० ॥ मधूत्सवः कुरवको रामालिंगनकामुकः । रागप्रसवकश्चैव सुभगः प्रसवस्तथा ॥ ८१ ॥ तथैव भ्रमरानंदो 'राजनामनिघंटके'। महासहा तु कुरवो रक्ताम्लातक एव च ॥ ८२ ॥ अम्लानो रक्तपुष्पः स्याच्छोणझिंटी तथैव च । रक्तझिंटी कटकिनी पर्णाढ्यः शोणझिंटिका ॥ ८३ ॥ वर्णपुष्पस्तथा प्रोक्तो वैद्यविद्याविशारदैः । **गुणाः** । रक्ताम्लानः कटूष्णः स्याद्वातशोफज्वरघ्नकः ॥ ८४ ॥ शूलाध्मानहरो वर्ण्यः श्वासकासहरो 'नृपे' ५४ **पीताम्लान** । म० पिवळा कोरांटा । गु० पीळो कांटा अशेलीयो । पीतस्तु किंकिरातस्यात्पीताम्लानः कुरंटकः ॥ ८५ ॥ कनकः पीतकुरवः सुपीतकुसुमस्तथा । सुपीतश्चैव संप्रोक्तो 'राजनामनिघंटके' ॥ ८६ ॥ सहाचरः सहचरः पुरः सहचरी मता । कुरंटकः कुरंटः स्यात्प्रोक्तो वैद्यविशारदैः ॥ ८७ ॥ **गुणाः** । किंकिरातः कषायोष्णस्तिक्तश्च कफवातजित् । दीपनः शोफकडूतिरक्तत्वग्दोषहा 'नृपे' ॥ ८८ ॥ ५५ **नीलाम्लान** । म० निळा कोरांटा, बाणपुष्पी । गु० नीळो कांटा अशेलीयो । नीलपुष्पा तु सादासी नीलाम्लानस्तु छादनः। बला चार्तगला चैव नीलपुष्पस्तु 'राजके' ॥ ८९ ॥ बाणा बाणी बाणपुष्पो बाणो नीलकुरंटकः । स्यान्नीलकुसुमा नीलाझिंटी नीलप्रसूनका ॥ ९० ॥ स्यात्कंटार्तगला प्रोक्ता राजसैरेयकस्तथा । तथा त्वोदनपाकी स्यात्संप्रोक्तः केशरंजनः ॥ ९१ ॥ **गुणाः** । आर्तगला कटुस्तिक्ता कफमारुतशूलनुत् । कडुकुष्ठव्रणान्हन्ति शोफत्वग्दोषहा 'नृपे' ॥ ९२ ॥

[ अत्र कंटर्तगला वन्या नीलझिंटी ( रान निळा कोरांटा ) इति ज्ञेया, तथा च शोणी कुरवकनाम्नी, कटकिनी, शोणझिंटिका ( रान कोरांटा, रान रक्तकोरांटा ) इति ज्ञेया ] ५६ कंटकुरंट । म० पिवळा कोरांटा । गु० जंगली पीळो कांटा अशेलीयो । कंटकुरंटकः कंटझिंटी वन्या सहाचरी । गुणाः । झिंटिकाः कटुकास्तिक्ता दंतशूलामयापहाः॥ ९३ ॥ कफवातहराश्चैव शोफकासहरास्तथा । त्वग्दोषनाशकारिण्यः प्रोक्ता 'राजनिघंटके'। ॥९४॥'कैय्ये' तु मधुरः स्निग्धस्तिक्तोष्णः केशरंजनः। कुष्ठकंडूविषमश्च संप्रोक्तो वैद्यनायकैः ॥९५॥ हिमरितकस्तृष्णानिभो दाहहा केशवर्धनः। बल्यो वृष्यस्त्रिदोषघ्नो ' धन्वंतरिनिघंटके ' ॥९६॥ वातासक्तादा प्रोक्तो ' द्रव्यरत्नाकरे ' तथा । ५७ उट्रकांडी । म० उताटी । गु० उताटी । उक्तकांडी रक्तपुष्पी ज्ञेया करभकाडिका ॥ ९७ ॥ रक्ता लोहितपुष्पी च वर्णपुष्पी तु ' राजके '। गुणाः । उट्रकांडी तु तिक्तोष्णा रुच्या हृद्रोगहारिणी॥ ९८ ॥ तद्बीजं मधुरं शीतं वृष्यं संतर्पणं ' नृपे '।

**५८ पिंडीतगर** । म० पिंडीतगर । कों० अनंत । गु० पिंडीतगर । तगरं कुटिलं वक्रं विनम्रं कुंचितं नतं ॥ ९९ ॥ शठं च नहुषाख्यं च दद्रुहस्त च बर्हणं । पिंडीतगरकं चैव पार्थिवं राजहर्षण ॥३००॥ कालानुसारकं क्षत्रं दीनं जिह्मं तु ' राजके ' । कालानुसार्यमनुजु 'धन्व' तु नहुष नृपं ॥ १ ॥ बर्हिण ' केयदेवे ' तु ' मदे ' कटु महोरगं। कालानुसारिणी चक्रं संप्रोक्तं ' गणनामके ' ॥ २ ॥ **गुणाः** । तगर शीतलं तिक्तं दृष्टिदोषविनाशनं । भूतोन्मादहरं पथ्यं विषघ्न ' राजनामके ' ॥ ३ ॥ स्निग्ध दोषत्रयघ्न स्याच्छिरोरोगहरस्तथा । अपस्मारहरं प्रोक्तं ' धन्वंतरिनिघंटके ' ॥ ४ ॥ ५९ **दमनक** । म० दवणा । गु० डमरो । दमनो दमनकः स्याद्दान्तो गंधोत्कटोमुनिः । पुंडरीको महाजटा जटिलः पाडुरागकः ॥५॥ पुत्रः पवित्रको दढी विनीतो देवशेखरः। तथा तपस्विपुत्रः स्यात्प्रोक्तस्तापसपुत्रकः ॥ ६ ॥ कुलपुत्रश्च समोक्तो ' राजनामनिघंटके '। 'धन्वतरिनिघंटे' स्याचपस्वी ऋषिपुत्रकः ॥ ७ ॥

गु० मोटो शेवंती गुलाब । महती राजतरणी अम्लानो 'वर्ण्यपुष्पकः । सुपुष्पः सुवर्णपुष्पो महासहामिलातकः ॥ ७७ ॥ ' नृपे ' तु देवतरणी बृहत्पुष्पा तु ' धन्वके ' । महाकुमारी संप्रोक्ता ' भावनामनिघंटके ' ॥ ७८ ॥ **गुणाः** । ' नृपे ' तु राजतरणी कषाया कफकारिणी । चक्षुष्या सर्वदा हृद्या सुरभिः सुरवल्लभा ॥ ७९ ॥ ५३ **रक्ताम्लान** । म० रक्तकोरांटा, अबोली । गु० रातो कांटा अशेलीयो । रक्ताम्लानो रक्तसहश्चापरिम्लानकस्तथा । रक्तामलातकश्चैव रक्तप्रसव एव च ॥ ८० ॥ मधूत्सवः कुरबको रामालिंगनकामुकः । रागप्रसवकश्चैव सुभगः प्रसवरतथा ॥ ८१ ॥ तथैव भ्रमरानंदो ' राजनामनिघंटके ' । महासहा तु कुरबो रक्ताम्लातक एव च ॥ ८२ ॥ अम्लानो रक्तपुष्पः स्याच्छोणझिंटी तथैव च । रक्तझिंटी कंटकिनी पर्णाढ्यः शोणझिंटिका ॥ ८३ ॥ वर्णपुष्पस्तथा प्रोक्तो वैद्यविद्याविशारदैः । **गुणाः** । रक्ताम्लानः कटूष्णः स्याद्वातशोफज्वरघ्नकः ॥ ८४ ॥ शूलाध्मानहरो वर्ण्यः श्वासकासहरो ' नृपे ' ' ५४ **पीताम्लान** । म० पिवळा कोरांटा । गु० पीळो कांटा अशेलीयो । पीतस्तु किंकिरातस्यात्पीताम्लानः कुरंटकः ॥ ८५ ॥ कनकः पीतकुरवः सुपीतकुसुमस्तथा । सुपीतश्चैव संप्रोक्तो ' राजनामनिघंटके ' ॥ ८६ ॥ सहाचरः सहचरः पुरः सहचरी मता । कुरंटकः कुरंटः स्यात्प्रोक्तो वैद्यविशारदैः ॥ ८७ ॥ **गुणाः** । किंकरातः कषायोष्णस्तिक्तश्च कफवातजित् । दीपनः शोफकंडूतिरक्तत्वग्दोषहा ' नृपे ' ॥ ८८ ॥ ५५ **नीलाम्लान** । म० निळा कोरांटा, बाणपुष्पी । गु० नीळो कांटा अशेलीयो । नीलपुष्पा तु सादासी नीलाम्लानस्तु छादनः । बला चार्तगला चैव नीलपुष्पस्तु ' राजके ' ॥ ८९ ॥ बाणा बाणी बाणपुष्पो बाणो नीलकुरंटकः । स्यान्नीलकुसुमा नीलझिंटी नीलप्रसूनका ॥ ९० ॥ स्यात्कंटार्तगला प्रोक्ता राजसैरेयकस्तथा । तथा स्वोदनपाकी स्यात्संप्रोक्तः केशरंजनः ॥ ९१ ॥ **गुणाः** । आर्तगला कटुरतिक्ता कफमारुतशूलनुत् । कंडूकुष्ठव्रणान्हन्ति शोफत्वग्दोषहा 'नृपे' ॥ ९२ ॥

[ अत्र कंटतंगला वन्या नीलझिंटी ( रान निळा कोरांटा ) इति ज्ञेया। तथा च शोणी कुरबकनाम्नी, कंटकिनी, शोणझिंटिका ( रान अबोली, रान रक्तकोरांटा ) इति ज्ञेया ] ५६ कंटकुरंट । म० पिंवळा रानकोरांटा । गु० जंगली पीळो कांटा अशेलीयो । कंटकुरंटकः कंटझिंटी वन्या सहाचरी। गुणाः। झिंटिकाः कटुकास्तिक्ता दंतशूलामयापहाः॥९३॥ कफवातहराश्चैव शोफकासहरास्तथा। त्वग्दोषनाशकारिण्यः प्रोक्ता 'राजनिघंटके'। ॥९४॥'कैये' तु मधुरः स्निग्धस्तिक्तोष्णः केशरंजनः।कुष्ठकंडूविषघ्नश्च संप्रोक्तो वैद्यनायकैः ॥९५॥ हिमस्तिक्तस्तृषानिघ्नो दाहहा केशवर्धनः। बल्यो वृष्यस्त्रिदोषघ्नो ' धन्वंतरिनिघंटके ' ॥९६॥ वातास्रकफहा प्रोक्तो ' द्रव्यरत्नाकरे ' तथा । ५७ उटकांडी । म० उताटी । गु० उताटी । उत्कांडी रक्तपुष्पी ज्ञेया करभकांडिका ॥ ९७ ॥ रक्ता लोहितपुष्पी च वर्णपुष्पी तु ' राजके '। गुणाः । उटकांडी तु तिक्तोष्णा रुच्या हृद्रोगहारिणी॥ ९८ ॥ तद्बीजं मधुरं शीतं वृष्यं संतर्पणं ' नृपे '। ५८ पिंडीतगर । म० पिंडीतगर । कों० अनंत । गु० पिंडीतगर । तगरं कुटिलं वक्रं विनम्रं कुंचितं नतं ॥ ९९ ॥ शठं च नहुषाख्यं च दद्रुहस्तं च बर्हणं । पिंडीतगरकं चैव पार्थिवं राजहर्षणं ॥२०००॥ कालानुसारकं क्षत्रं दीनं जिह्मं तु ' राजके '। कालानुसार्यमभृजु 'धन्वे' तु नहुषं नृपं ॥ १ ॥ बर्हिणं ' कैयदेवे ' तु ' मदे ' कटु महोरगं । कालानुसारिणी चक्रं संप्रोक्तं ' गणनामके ' ॥ २ ॥ गुणाः । तगरं शीतलं तिक्तं दृष्टिदोषविनाशनं । भूतोन्मादहरं पथ्यं विषघ्नं ' राजनामके ' ॥ ३ ॥ स्निग्धं दोषत्रयघ्नं स्याच्छिरोरोगहरस्तथा । अपस्मारहरं प्रोक्तं ' धन्वंतरिनिघंटके ' ॥ ४ ॥ ५९ दमनक । म० दवणा । गु० डमरो । दमनो दमनकः स्याद्दान्तो गंधोत्कटोमुनिः । पुंडरीको ब्रह्मजटा जटिलः पांडुरागकः ॥५॥ पुत्रः पवित्रको दंडी विनीतो देवशेखरः। तथा तपस्विपुत्रः स्याच्चोक्तस्तापसपुत्रकः ॥ ६ ॥ कुलपुत्रश्च संप्रोक्तो ' राजनामनिघंटके '। 'धन्वंतरिनिघंटे' स्याचपस्वी ऋषिपुत्रकः ॥ ७ ॥

ब्रह्मजटी तथा ' कैये ' दमो मुनिसुतो ' गणे ' ॥ दमनो मुनिपुत्रः स्यात्सुगंधः पुष्पचामरः ॥ ८ ॥ तपोधनस्तथा प्रोक्तो भिषग्विद्याविशारदैः । गुणाः । दमनः शीतलस्तिक्तः कषायः कटुकस्तथा ॥ ९ ॥ त्रिदोषदद्रुकुष्ठघ्नः स्फोटघ्नो ' राजनामके ' । भूतदोषहरो हृद्यः प्रोक्तो ', धन्वनिघंटके ' ॥ १० ॥ ' कैये ' तु पिटिकाकडुग्रहपीडानिवारण । अर्शःश्विन्नापहः प्रोक्तो वैद्यै ' मदनपालक ' ॥ ११ ॥ ६० वन्यदमनकः । म० रानदवणा । गु० वनडमरो । ततश्च वन्यदमनो दमनो वनपूर्वकः । गुणाः । अरण्यदमनः प्रोक्तो वीर्यस्तमनकारकः ॥ १२ ॥ बलदश्चामदोषघ्नो ' राजनामनिघंटके ' । ६१ तुलसी । म० तुळस । गु० तुलसी । तुलसी सुभगा तीव्रा पावनी विष्णुवल्लभा ॥ १३ ॥ सुरज्या सुरसा ज्ञेया कायस्था सुरदुंदुभी । सुरभी बहुपत्री स्यान्मजरी सा हरिप्रिया । १४ अपेतराक्षसी श्यामा गौरी त्रिदशमंजरी । भूतघ्नी पूतपत्री स्या ' द्राजनामनिघंटके ' ॥ १५ ॥ देवदुंदुभिका ग्राम्या 'धन्वे' तु बहुमंजरी । सुलभा विष्णुपत्नी स्यान्माला श्रेष्ठा च माधवी ॥ १६ ॥ पापघ्नी पत्रपुष्पा स्यान्मालाश्रेष्ठतमा तथा । अमृता वैष्णवी वृंदा सुगंधा गंधहारिणी ॥१७॥ पर्णासिः सुवहा पुण्या कुठेरकः कठिंजरः । सुरवल्ली तथा श्रीः स्यात्सप्रोक्ता प्रेतराक्षसी ॥ १८ ॥ स्यात्कृष्णवल्लभा प्रोक्ता तथा सुरभिमंजरी । ६२ कृष्णतुलसी । म० काळी तुळस । गु० काळी तुलसी । स्यात्कृष्णतुलसी कृष्णा कृष्णपर्णी करालकः ॥ १९ ॥ ६३ श्वेततुलसी । म० पांढरी तुळस । गु० धोळी तुलसी । ततः श्वेततुलसी स्याच्छ्वेता लक्ष्मीः सिताह्वया । गुणाः । तुलसी कटुतिक्तोष्णा वातघ्नी श्लेष्मवातजित् ॥२०॥ जंतुभूतकृमिघ्नी स्याद्रुचिकृ ' द्राजनामके ' । तुलसी चासिता श्वेता गुणैस्तुल्या प्रकीर्तिता ॥ २१ ॥ कासलूताहरा प्रोक्ता ' मदनामनिघंटके ' । पित्तकृद्दाहकृद् हृद्या दीपनी कुष्ठनाशिनी ॥ २२ ॥ कफघ्नी रक्तकृच्छ्रघ्नी श्वासघ्नी ॥ ' मदे ' स्मृता । हिक्काज्वरविषघ्नी स्याद्दौर्गंध्यघ्नी तु शूलहा ॥ २३ ॥ ६४ मरुवकः । म० मरवा । गु० मरवो । मरुवः खरपत्रस्तु

गंधपत्रः फणिज्जकः । बहुवीर्यः शीतलकः सुराह्वश्च समीरणः ॥ २४ ॥ जंबीरः प्रस्थकुसुमो ज्ञेयो मरुबकस्तथा । आजन्मसुगंधिपत्रो मरीचो 'राजनामके' ॥ २५ ॥ फणी मरुत्तकश्चैव मरुर्मरुवको 'धने' । 'कैयदेवनिघंटे' तु सुखात्मकः खरबुकः ॥ २६ ॥ मरुत्तीक्ष्णो 'मदे' चैव तथैव प्रस्थपुष्पकः । सुगधो मंजरीकश्च मरिचः कुलसौरभः ॥२७॥ द्विधा मरुवकः प्रोक्तो श्वेतश्चैव सितेतरः । श्वेतो भेषजकार्ये स्यादपरः शिवपूजने ॥ २८ ॥ **गुणा** । मरुवः कटुतिक्तोष्णः कृमिकुष्ठविनाशनः। विड्बधाध्मानशूलघ्नो मांद्यत्वग्दोषहा 'नृपे' ॥ २९ ॥ 'कैये' तु कफपित्तास्रकुष्ठकडूज्वरापहः । लघुः शूलहरः प्रोक्तो वैद्ये 'द्रव्यनिघंटके' ॥ ३० ॥ वृश्चिकादिविषघ्नश्च श्लेष्मवातहरो 'मदे' । अग्निमदो भिषक्श्रेष्ठैः प्रोक्तो 'भावप्रकाशके' ॥ ३१ ॥ ६५ **क्षुद्रपर्णोऽर्जक**। म० बारीक पानांचा अजवला । गु० झीणो पाननो अजवलो । अर्जकः क्षुद्रतुलसी क्षुद्रपर्णो गुखार्जकः ॥ ३२ ॥ उग्रगधश्च जबीरः कुठेरश्च कठिंजरः । कुंठो पर्णासकश्चैव 'नृपे' 'मदनपालके' ॥ ३३ ॥ ६६ **श्वेतार्जक** । म० पांढरा अजवला, रानतुळस । गु० धोळो अजवलो । सितार्जकस्तु वैकुंठो वटपत्रः कुठेरकः । जबीरो गंधबहुलः सुमुखः कटुपत्रकः ॥ ३४ ॥ 'नृपे' मोकस्तथा 'धन्वे' पर्णासो बिल्वगंधकः । 'गणे' शुक्लार्जकोवण्यस्तथा सौगंधिपत्रकः ॥ ३५ ॥ तीक्ष्णश्च श्वेतपर्णासस्तीक्ष्णगंधः सितच्छदः । कपित्थार्जक इत्युक्तो बिल्वगंधो वटच्छदः ॥ ३६ ॥ ६७ **कृष्णार्जक**। म० काळा अजवला । गु० काळो अजवलो । कृष्णार्जकः कालमालो मालुकः कृष्णमालुकः । गरघ्नो कृष्णमल्लीका 'नृप' तु वनबर्बरः ॥ ३७ ॥ बर्बरी कारवी 'कैये' करालः कपिलार्जकः । **गुणाः** । त्रयोऽर्जकाः कटूष्णाः स्युः कफवातामयापहाः ॥ ३८ ॥ नेत्रामयहरा रुच्याः सुखप्रसवकारकाः । कृत्रिमं च विषं हन्यू रक्तदोषविनाशनाः ॥ ३९ ॥ 'नृपोक्ता' 'द्रव्यरत्ने' तु कफवातज्वरापहा । अर्शोदद्रुकृमिघ्नीति

प्रोक्ता ' मदनपालके ' ॥ ४० ॥ अरुचिच्छर्दिहरेति प्रोक्ता ' गणनिघंटके '। कटुः पाके विदाही च तीक्ष्णा हृद्या रुचिप्रदा ॥ ४१ ॥ दीपनः पित्तला चैव श्वासकासहरा मतं। हृद्रोगपार्श्वशूलघ्नी प्रोक्ता ' कैयनिघंटके '॥ ४२ ॥ ६८ वनबर्बरिका। म० सुगंध अजवला। गु० सुगंध अजवलो। बर्बरिकाऽन्या तु सुगंधिः सुप्रसन्नकः। वेोवेल्लिशी विषघ्नश्च सुमुखः सूक्ष्मपत्रकः ॥ ४३ ॥ निद्रालुः शोफहारी च सुवक्त्रो ' राजनामके '। सुवदनस्तथा सौम्यो गरघ्नः कटुपत्रकः ॥ ४४ ॥ ' धन्वंतरिनिघंटे ' तु संप्रोक्ता वैद्यनायकैः। गुणाः। वनबर्बरिका चोष्णा सुगंधा कटुका तथा ॥ ४५ ॥ विशाखवान्तिभूतघ्नी घ्राणसंतर्पणा ' नृपे '। पित्तकृत्पार्श्वशूलघ्नी श्वासदौर्गंध्यकासहा॥ ४६॥ कफानिलविषघ्नी च ' धन्वंतरिनिघंटके '। ६९ गंगापत्री। म० गंगावती। कों० भांबरूड। गंगापत्री सुपत्री स्यात्सुबधा गंधपत्रिका ॥ ४७॥ गुणाः ॥ गंगापत्री कटूष्णा च वातव्रणहरा ' नृपे '। ७० पाची। म० पाच। गु० पानडी। पाची मरकतपत्री हरितलता हरितपत्रिका पत्री ॥ ४८ ॥ सुरभिर्भल्लारिष्टा गारुत्मतपत्रिका तु ' नृपे '। स्पृक्का देवी देवपत्री निर्माल्या ब्राह्मणी वधूः ॥ ४९ ॥ ' द्रव्यरत्नाकरे ' प्रोक्ता भिषग्विद्याविशारदैः। गुणाः। पाची कटूष्णा तिक्ता च कफापा वातरोगहा ॥ ५० ॥ ग्रहभूतव्रणघ्नी च त्वग्दोषापहरा ' नृपे '। दाहतृष्णाविषघ्नीति ' द्रव्यरत्नाकरे ' स्मृता ॥ ५१ ॥ ७१ वालक। म० पांढरा वाळा। गु० धोळो वाळो। वालकं वारिपर्यायैरुक्तं ऱ्हीबेरकं तथा। केश्यं वज्रमुदीच्यं च पिंगं च ललनाप्रियं ॥ ५२ ॥ वालं च कुंतलोशीरं कचामोदं तु ' राजके '। ऱ्हीबेरं वारि तोयं च पिंगं तु जलमंबुजं ॥ ५३ ॥ कचमाचमन ' धन्वे ' गंधमूलं तु ' द्रव्यके '। ' मणे ' वरिष्ठमब्जाह्वं बर्हिष्ठं केशमेव च ॥ ५४ ॥ कटायनं वीरभद्रं वालं केशांबुनाम च। अवदंतं चावदान कंभु दाहहरं तथा ॥ ५५ ॥ गुणाः। वालकं शीतलं तिक्तं पित्तवातितृषापहं। ज्वर-

कष्टातिसारघ्न केश्य श्वित्रव्रणापनुत् ॥ ५६ ॥ 'नृपे' प्रोक्तं तथा 'धन्वे' कडुघ्न दाहकुष्ठनुत् । पित्तश्लेष्मविसर्पघ्न कफरक्तहर भुव ॥ ५७ ॥ दीपन पाचन चैव रक्तपित्तविनाशन । कफघ्न च हृल्लास दाह हृद्गदमित्यपि ॥ ५८ ॥ हन्ति 'केये' भिषक्श्रेष्ठैः प्रोक्त विषहर 'मदे' । ७२ बर्बर । म० रानतुळस, काळी बाबरी, वैजयंती तुळस । गु० वनतुलसी । बर्बरः सुमुखश्चैव गरघ्नः कृष्णबर्बरः ॥ ५९ ॥ सुकदनो गंधपत्रः पूतगंधः सुराईकः । प्रोक्ता 'राजनिघंटे' तु बर्बरी कबरी तथा ॥ ६० ॥ खरपुष्पाऽजगंधा च वनजा कारवी तुर्गी । गुणाः । बर्बरः कटुकोष्णश्च सुगंधिर्वातनाशनः ॥ ६१ ॥ विसर्पविषविध्वसी स्वग्दोषशमनो 'नृप' । ७३ सुरपर्ण । म० सुरपीण, सुरपत्री । गु० सुरपीण । सुरपर्ण देवपर्ण चिरपर्ण सुगंधिक ॥ ६२ ॥ मधिपत्र सूक्ष्मपत्र देवार्ह गंधपत्रक । प्रोक्त 'राजनिघंटे' तु चिरपत्री तथा स्मृता ॥ ६३ ॥ गुणा० । कटूष्ण सुरपर्ण च कृमिश्वासवलासजित् । दीपनं कफवातघ्न वर्ण्य वातहर 'नृपे' ॥ ६४ ॥ ७४ आरामशीतला । म० रामशाली, सुगधपत्रा । गु० आरामशीतला । आरामशीतलाऽऽनंदा शीतला सा सुनदिनी । रामा चैव महानदा गंधाढ्या रामशीतला ॥ ६५ ॥ 'नृपे' प्रोक्ता तथा 'केये' देवगधा तु भूरिका । चिटिका भक्तिका भूरिः प्रोक्ता वैद्यविशारदैः ॥ ६६ ॥ गुणा० । आरामशीतला तिक्ता शीतला पित्तहारिणी । दाहघ्नी व्रणशापघ्नी विस्फोटकहरा 'नृपे' ॥ ६७ ॥ कफपित्तास्रजित् प्रोक्ता 'केयदेवनिघंटके' । ७५ कमल । म०, गु० कमल । पाथोज कमल पद्म नलिनाम्भोजमंबुज ॥ ६८ ॥ श्रीपद्म चाम्बुजन्माब्ज नभश्चाम्बुरुह कज । जलज सारस वार्जं पकजं सरसीरुह ॥ ६९ ॥ पंकेरुह तामरस शतपत्र कुशेशय । सहस्रपत्र कुटप ततः सलिलज मत ॥ ७० ॥ स्याद्बिसकुसुम कजमरविंद महोत्पल । पाथोरुह तु राजीव ततः सरसिज स्मृत ॥ ७१ ॥ प्रोक्त वारिरुह चैव पुष्कराम्भोरुह 'नृपे' । बिसप्रसूननालीकनलानि जलजन्म च ॥ ७२ ॥ कवार जल-

तु सग्राहि प्रोक्त वैद्यविचक्षणैः । ८२ **पद्मकंद** । म०,गु० कमळकंद । पद्मकदस्तु शालूक पद्ममूल कटाह्वय ॥ ६ ॥ शालिन च जलालूक प्रोक्त ' राजनिघंटके ' । शालुक करहाट च पद्ममूल तु ' धन्वके ' ॥ ७ ॥ मृणालमूल भिस्साड भिससट पक्सूरणः । गोपभद्रः कजमूलं शालु चैव प्रकीर्तितः ॥ ८ ॥ **गुणा.** । शालूक कटुविटम्भि रूक्ष रुच्य कफापह । कषाय कासपित्तघ्न तृष्णादाहहर 'नृप' ॥९॥८३ **किंजल्क**। म. गु. कमळकेसरा । किंजल्क मकरद च केसर पद्मकेसर । किंज पीत पराग च तुग चांपेयक ' नृपे ' ॥ १० ॥ पद्मकिंजल्कमापीत गौर काचनक ' धन्वे ' । तथा ' मदनपाल ' तु काचनाह्वयमीरित ॥ ११ ॥ तथा पीतपराग च चांपेय काचन स्मृत । **गुणाः** । किंजल्क मधुर रूक्ष कटु चास्यव्रणापह ॥ १२ ॥ शिशिर रुच्य पित्तघ्न तृष्णादाहहर ' नृपे ' । ' मदन' ग्राहि समोक्त रक्तार्श कफपित्तजित् ॥ १३ ॥ विषशोथहर चैव कातिद ' भावनामके ' । ८४ **संवर्तिका** । म० कमळाच्या कोंवळ्या पाकळ्या । गु० कमलना कूणा पान । संवर्तिका पद्मपत्र पद्मपर्ण नव दल ॥ १४ ॥ **गुणाः** । संवर्तिका हिमा तिक्ता कषाया दाहतृड्व्रणत् । मूत्रकृच्छ्रगुदव्याधिरक्तपित्तहरा ' भवे ॥ १५ ॥ ८५ **कर्णिका** । म० ज्यांत कमळाचें बीं असतें ता गर्भकोश । गु० कमळकोश । बीजकोशोऽब्जकर्णी स्याद्वराटी बीजमातृका । **गुणाः** । पद्मस्य कर्णिका तिक्ता कषाया मधुरा हिमा॥१६॥ मुखवैशद्यकृल्लघ्वी तृष्णास्रकफपित्तनुत् । ' भावप्रकाशे ' सप्रोक्ता वैद्यविद्याविचक्षणैः ॥ १७ ॥ ८६ **उत्पल** । म० लहान कमळ चंद्रविकाशी । गु० नहाना कमळ चंद्रविकाशी । अनुष्ण चोत्पल चैव रात्रिपुष्प जलाह्वयं । हिमाब्ज सितजलज निशाफुल्ल तु ' राजके ' ॥ १८ ॥ निशापुष्प तथा प्रोक्त वैद्यविद्याविशारदैः । **गुणाः** । उत्पल शिशिर स्वादु पित्तरक्तार्तिदाहनुत् ॥ १९ ॥ दाहश्रमवमिभ्रांतिकृमिज्वरहर ' नृप ' । ८७ **कुमुद, धवलोत्पल** । म० कुमुद, पांढर कमळ चंद्रविकाशी, कापूरकमळ । गु० पोयणा, धोळा कमळ चंद्रविकाशी ।

धवलोत्पलं तु कुमुदं कल्हारं कैरवं तथा ॥ २० ॥ शीतलं शशिकांतं च चंद्राब्ज चंद्रिकांबुज । तथद्रुकमलं चैव प्रोक्तं 'राजनिघटके' ॥ २१॥ सितोत्पलं नीलवृतं चंद्रकांत शशिप्रियं । गर्दभ श्वेतजलजं तथा सोमप्रिय मतं ॥ २२ ॥ श्वेतोत्पलं कुमुच्चैव शशिप्रभं जलेरुहं । गंधसोमं तु श्रीगेहं चद्रेष्टं तु प्रकीर्तितं ॥ २३ ॥ **गुणाः** । कुमुदं शीतलं स्वादु पाके तिक्तं कफापहं । रक्तदोषहरं दाहश्रमपित्तहरं 'नृपे' ॥ २४ ॥

८८ **नीलोत्पल** । म० निळें कमळ चंद्रविकाशी । गु० नीलकमल चंद्रविकाशी । नीलोत्पले तु कंदोत्थं सुगंधं चासितोत्पलं । इंदीवरं चोत्पलकं तथा सौगधिकं मतं ॥ २५॥ तथा कुवलयं चैव कुड्मलं 'राजनामके'। कंदोट तु तथा भद्रं प्रोक्तं वैद्यविशारदैः ॥२६॥ गुणाः। नीलोत्पलमतिस्वादु शीतं सुरभि सौख्यकृत् । पाके तु तिक्तमत्यन्तं रक्तपित्तहरं 'नृपे' ॥ २७ ॥

८९ **उत्पलिनी** । म०, गु० चंद्रविकाशी कमलिनी । उत्पलिनी कैरविणी कुमुद्वती तदुत्तरं । कुमुदिनी तु चंद्रेष्टा स्यात्कुवलयिनी स्मृता ॥ २८ ॥ स्यान्नीलोत्पलिनी चैव तथेंदीवरिणी 'नृपे'। तथा कुमुदिका चैव संप्रोक्ता चोडुपप्रिया ॥ २९ ॥ **गुणाः**। उत्पलिनी हिमा तिक्ता पित्तघ्नी रक्तदोषजित् । वान्त्यादिकफकासघ्नी तृष्णाश्रमहरा 'नृपे' ॥ ३० ॥

९० **कुमुद्वती** । म० कमुदबीज (धांगुडाचे आंतील बीं)। गु० कुमुदबीज । **गुणाः** । भवेत्कुमुद्वतीबीजं स्वादु रूक्षं हिमं गुरु ।

९१ **रक्तकुमुद** । म० रक्तोत्पल, तांबडें कुमुद । गु० लाल कमोद । हल्लक रक्तकुमुद सोमाख्यं रक्तकैरवं ॥ ३१॥ तथा रक्तोत्पलं रक्तकल्हारं रक्तसंध्यकं ।

९२ **जात्युत्पल** । म० किंचित् श्वेतरक्तवर्ण लहान जातीचें कमल । गु० धोळां लालरंगनु कमल । जात्युत्पलं कल्हारं सौम्यकं सौम्यगन्धिक ॥३२॥ सौगंधिकं सुगंधि च शीतं स्याच्छीतरोहणं । तथा शीतरुहं चैव संप्रोक्त च वरोत्पल ॥ ३३ ॥

९३ **कल्हार** । म० कल्हार, लहान जातींचें पांढरें कमल । गु० नहानी जातनुं धोळां कमळ । कल्हारं ऱ्हस्वपाथोज तथा सौगंधिकं मतं । हेमाह्वं

हंसपाथोज महागंधं वनोत्पल ॥ ३४ ॥ रक्तनाल कर्णपूरं न्हस्वोत्पल-
मिति स्मृत । गुणाः । कल्हारं ग्राहि विष्टंभि रूक्ष चातिहिम गुरु
॥ ३५ ॥ १४ **कमलिनीपत्रगुणाः** । म० कमळणीच्या पानाचे गुण।
गु० कमळणींनां पाननां गुण । मधुर शीततुवर कटुक पद्मिनीदल ।
वातलं ग्राहि तिक्त च कफपित्तहर लघु ॥ ३६ ॥ १५ **पुष्पद्रव** । म०
१ पुष्पांतील मध २ पुष्पाचा सुगंधी अर्क । गु० फूलना मध, फूलनो
अर्क । पुष्पद्रवः पुष्पसारः पुष्पस्वेदश्च पुष्पजः । पुष्पनिर्यासकश्चैव पुष्पा-
म्बुजन्तु ' राजके ' ॥ ३७ ॥ मकरंदः पुष्परसः ' कोशे ' चैव प्रकी-
र्तितः । **गुणाः** । पुष्पसारः सुगंधिश्च कषायः शीतलः सरः ॥ ३८ ॥
दाहश्रमवमिभ्रान्तितृष्णापित्तकफापहः । अरोचकास्यरोगघ्नो गौल्यः
संतर्पणः स्मृतः ॥ ३९ ॥ १६ **जात्यादिमोद** । जाई आदिकरून
पुष्पाचा परिमल । जाती भाति मृदुर्मनाङ्मधुराऽऽमोदो मुहूर्तद्वय । द्विगु-
णयेन च मल्लिका मदकरी गंधाधिका यूथिका ॥ एकाह वनमालिका
मदकर चाह्ना मय चंपक । तीव्रामोदमथाष्टवासरमिता मोदान्विता
केतकी ॥ ४० ॥

इति करवीरादिवर्गः समाप्तः ॥

---

## ९ आम्रादिवर्गः

**१ आम्र** । म० अंबा । गु० आंबो । आम्रः कामशरश्चूतो रसालः
कामवल्लभः । कागाग: सहकारश्च कीरेष्टो माधवद्रुमः ॥ ४१ ॥ भृंगाभीष्टः
सीधुरसो मधूली कोकिलोत्सवः । वसंतदूतोऽम्लफलो मोदाख्यो मन्म-
थालयः ॥ ४२ ॥ मध्वावासः सुमदनः पिकरागो नृपप्रियः । प्रि-
याम्बुः कोकिलावासः प्रोक्तो ' राजनिघंटके ' ॥ ४३ ॥ ' धन्वंतरिनि-
घंटे ' तु परपुष्टमहोत्सवः । वनपुष्पोत्सवश्चैव मधुदूतोऽतिसौ-
रभः ॥ ४४ ॥ वसंतपादपश्चैव शंरष्टो मदिरासवः । सुफलो मधुफलः

स्यान्माकदो मदिरासखः ॥ ४५ ॥ स्यात्पिकबांधव. प्रोक्तः ' कैये '
कोकिलबधुकः । मन्मथः सुपथो मोदः कातः पिकमहोत्सवः ॥ ४६ ॥
श्यामतैलश्चैत्रवृक्षस्तथा मद्यसखः स्मृतः । तथा ' मदनपाले ' तु पिक-
बधुर्वनोत्सवः ॥ ४७ ॥ मधुदूतस्तथा ' भावे ' ' गणे ' तु शौंढिक-
प्रियः । तथा मधुकरप्रीतः प्रोक्तो मधुकरप्रियः ॥ ४८ ॥ चूतकोऽम्रो
मनोज्ञश्च भृगेष्टः पिकवल्लभः । मृषालकः फलश्रेष्ठो मजरी षट्पदा-
तिथिः ॥ ४९ ॥ वसतद्रुः फलोत्पत्तिः स्त्रीप्रियः केशवायुधः ।
अलिप्रियो गधबधुः पिकप्रियः शुकप्रियः ॥ ५० ॥ तथा वैद्यैश्च
सप्रोक्तो कोषी तु भ्रमरप्रियः । गुणाः । बालाम्रः पित्तकृच्चैव वात-
कृत्कफकृत्तथा ॥ ५१ ॥ कंठामयहरश्चैव रक्तदोषप्रद' स्मृतः । त्रिदो-
षकृद्रुचिदः स्यात्कषायाम्लरसः स्मृतः ॥ ५२ ॥ पक्वाम्रश्च त्रिदो-
षघ्नो गुरुः स्वादुश्च पुष्टिदः । धातुवृद्धिकरश्चैव तर्पणः
कान्तिकारकः ॥ ५३ ॥ तृष्णाश्रमहरः प्रोक्तो ' राजनामनिघण्टके ' ।
योनिदोषातिसारघ्नः प्रमेहघ्नश्च ' कयके ' ॥ ५४ ॥ ' द्रव्ये ' तु कफ-
मातघ्नो व्रणहेति प्रकीर्तितः । ग्राही त्वर्शोहरः प्रोक्तो ' मदने ' नैघ-
नायकैः ॥ ५५ ॥ सहकाररसो हृद्यः सुरभिः स्निग्धरोचनः । त्वङ्मूल-
पल्लवं ग्राहि कषाय कफपित्तजित् ॥ ५६ ॥ पक्वाम्र चैव हृद्य च रुच्य
वर्णकर स्मृत । प्रोक्त ' धन्वनिघण्टे ' तु रक्तमासबलप्रद ॥ ५७ ॥
**२ कोशाम्र । म० कोशिंब, । लाल रान आंबा । गु० कोशम ।**
कोशाम्रस्तु घनस्कधो वनाम्रो जतुपादपः । क्षुद्राम्रश्चेति रक्ताम्रो लाक्षावृक्षः
सुरक्तकः ॥ ५८ ॥ ' नृपे ' प्रोक्तस्तथा ' धन्वे ' सुकोशस्तु जतुद्रुमः ।
तथा कृमितरुश्चैव कोशाम्रः कृमिवृक्षकः ॥ ५९ ॥ गुणाः । कोशाम्रः
पित्तकफकृद्दाहकृच्छोफकृत्तथा । वातघ्नश्च तथा पक्व मधुर स्वम्लमेव
च ॥ ६० ॥ रोचन दीपन बल्य पुष्टिद ' राजनामके ' । कुष्ठार्शःपित्त-
जिच्चैव ' द्रव्ये ' व्रणकफापहं ॥ ६१ ॥ तन्मज्जा दीपनी बल्या
पित्तमारुतजि ' न्नृपे ' । ग्राही वातहरः प्रोक्तो नवे ' माधमका-

कंटाफलः कंटकारी स्यान्मुरजफलश्च सः ॥ ९५ ॥ चंपकालुश्चपकोषः प्रोक्तो वैद्यविचक्षणैः । गुणाः । पनसो मधुरश्चैव पिच्छलो गुरुहृद्यकः ॥ ९६ ॥ बलवीर्यमदश्चैव भ्रमदाहविनाशनः । रुचिकृद्दुर्जरो ग्राही शोषनाशकरस्तथा ॥ ९७ ॥ ईषत्कषायं मधुरं तद्बीजं वातलं गुरु । तत्फलस्य विकाराघ्नं रुच्यं त्वग्दोषनाशनं ॥ ९८ ॥ बालं तु नीरसं हृद्यं मध्यपक्वं तु दीपन । रुचिदं लवणायुक्तं पनसस्य फलं 'नृपे' ॥ ९९ ॥ 'भावे' शीतगुणः प्रोक्तो विटंभी चामनाशनः । वातघ्नो गुरुदाहघ्नो बल्यो कफविवर्धनः ॥ १२०० ॥ मेदकृत्पनसो वर्ज्यो गुल्मिभिर्मंदवह्निभिः । तथैव तुवरश्चैव वातलो रक्तपित्तहा ॥ १ ॥ वृष्यो विपाके स्वादुश्च शीतलस्तर्पणो बृहत् । श्लेष्मलो वातपित्तघ्नः 'केये' रक्तक्षयापहा ॥ २ ॥ 'द्रव्ये' पित्तहरः प्रोक्तो 'मदे' शुक्रमदः स्मृतः । क्षतक्षयहरश्चैव 'भावे' बीजगुणः स्मृतः ॥ ३ ॥ वृष्यो गुरुमधुश्चैव मलबद्धकरस्तथा । मूत्रबद्धकरश्चैव वातपित्तकफापहा ॥ ४ ॥ ११ कदली । म०, गु० केळ । कदली सुफला रंभा सुकुमारी सकृत्फला । मोचा गुच्छफला हस्तिविषाणी गुच्छदंतिका ॥ ५ ॥ काष्ठीरसा च निःसारा राजेष्टा बालकप्रिया । ऊरुस्तंभा भानुफला वनलक्ष्मीश्च 'राजके' ॥ ६ ॥ स्वादुफला तथा दीर्घपत्रा ज्ञेया तु 'धन्वके'। स्यादायतच्छदा वीरा ग्रंथिनी 'द्रव्यनामके' ॥ ७ ॥ 'भावे' तु वारणबुसा संप्रोक्ता चांशमत्फला । कदलः कदलासारा तथा हस्तिविषाणिका ॥ ८ ॥ चर्मण्वती हस्तिबुसाऽवनीसारा तु मोचकः। स्याद्वारणबुषा तंतुविग्रहा नगरौषधिः ॥ ९ ॥ ग्रंथिनी ततपत्री च तथा वारणवल्लभा । गुणाः । बालं फलं कदल्यास्तु मधुराम्लं कषायकं ॥ १० ॥ पित्तघ्नं शिशिरं रुच्यं नालं पुष्पं तु पूर्ववत् । शूलघ्नं कदलीपर्णं कंदं तु कृमिहारि च ॥ ११ ॥ कदल्यास्तु फलं पक्वं कषायं मधुरं हिमं । रक्तपित्तहरं बल्यं वृष्यं कफकरं गुरु ॥ १२ ॥ मंदानले न पथ्यं च दीप्ताग्नौ सुखदं परं । सद्यः शुक्रकरं तृष्णाक्लमघ्नं कांतिदं तथा ॥ १३ ॥

संतर्पणं दुर्जरं च प्रोक्तं ' राजनिघंटके ' । विष्टंभि मांसलं दाहक्षुधावातास्रनाशनं ॥ १४ ॥ ' कैये ' प्रोक्तं तथा ' भावे ' मेहघ्नं नेत्ररोगजित् । कदलीगुणाः । स्निग्धा स्वाद्वी च पित्तास्रनाशनी योनिदोषजित् ॥ १५ ॥ कफाश्मरीहरा प्रोक्ता ' कैयदेवनिघंटके ' । रंभासारः शीतलश्च ग्राही हृद्यस्तृषापहा ॥ १६ ॥ मूत्रकृच्छ्रातिसारघ्नो दाहमोहहरस्तथा । रक्तपित्तहरश्चैव सोमरोगहरो ' द्रवे ' ॥१७॥ **१२ काष्ठकदली** । म०लोखंडी केळ । गु०काठकेळ। सुकाष्ठा काष्ठकदली कदलीवनसंज्ञका । काष्ठिका दारुकदली 'फलाढ्याऽश्मकदल्यपि ॥ १८ ॥ वनमोचा शिलारंभा ' राजनामनिघंटके ' । श्वेताऽनुकदली चैव विषघ्नी कदली तथा ॥ १९ ॥ पाषाणकदली चैव ' धन्वंतरिनिघंटके ' । कर्पासवद्बीजफला काष्ठीला तदनंतर ॥ २० ॥ काष्ठीलिकाऽश्मसारा च काष्ठा चैव तथा स्मृता । गुणाः । स्यात्काष्ठकदली रुच्या रक्तपित्तहरा हिमा ॥ २१ ॥ गुरुर्मंदाग्निजननी दुर्जरा मधुरा ' नृपे ' । **१३ गिरिकदली** । म०रानकेळ । कों०नवेणी, कोदर । गु०जंगली केळ '। अरण्यकदली चैव तथा गिरिकदल्यपि ॥ २२ ॥ तथा पर्वतमोचा च गिरिजा गजवल्लभा । गिरिरंभा तु सा ज्ञेया बहुबीजा तदुत्तरं ॥ २३ ॥ वनरंभा तथा प्रोक्ता ' राजनामनिघंटके ' । गुणाः । वनरंभा हिमा बल्या दुर्जरा रुचिवीर्यदा ॥ २४ ॥ तृट्पित्तदाहशोषघ्नी गुरुश्चैव ' नृपे ' स्मृता । **१४ सुवर्णकदली** । म०, गु० सोनकेळ । सुवर्णकदली पीता पीतरंभा सुरप्रिया ॥ २५ ॥ स्वर्णरंभा स्वर्णमोचा गौरा स्वर्णफला तथा । ज्ञेया चंपकरंभा च गौरस्था सुरंभिका ॥ २६ ॥ सुभगा कनकस्तंभा तथा हेमफला मता । प्रोक्ता ' राजनिघंटे ' तु स्यात्कांचनकदल्यपि ॥ २७ ॥ गुणाः । स्वर्णमोचा तु मधुरा दाहतृष्णापहा हिमा । स्वल्पाशने तु पथ्या च गुरुर्वृष्या कफापहा ॥ २८ ॥ **१५ नारिकेल** । म० नारळ, नारली। कों० माड । गु० नारीयेर । नालिकेरो रसफलः सुतुंगः कूर्चशेखरः । दृढनीरो नीर-

जूंरी स्थूलपिंडा मधुस्रवा ॥ ६२ ॥ फलपुष्पा स्वादुपिंडा हयभक्षा तु 'राजके'। 'धन्वंतरिनिघंटे' च स्थूलपिंडा प्रकीर्तिता ॥ ६३ ॥ दुरारोहा तु खर्जूरश्च 'द्रव्यरत्ने' मृदुच्छदा। तथा 'मदनपाले' तु मृदुला निर्मलीफला ॥ ६४ ॥ फलमुद्रिका पिंडा पिंडिका मधुरारसा । श्रेणी मृदुदला चैव दुरारोहा सुकंटका ॥ ६५ ॥ तथा वैद्यैस्तु संप्रोक्ता सुफला द्वीपसंभवा । २१ राजखर्जूरी । म० राजपिंडखजूर । गु० राजखजूर । तथाऽन्या राजखर्जूरी राजपिंडा नृपप्रिया ॥ ६६ ॥ मुनिखर्जूरिका वन्या राजेष्टा 'राजनाम्नि' च । गुणाः । पिंडखर्जूरिकायुग्मं शैत्यं स्वादे हिमं गुरु ॥ ६७ ॥ पित्तदाहार्तिश्वासघ्नं श्रमहृद्वीर्यवृद्धिदं । तृष्णा दाहहरा वृष्या मधुरा शोषहारिणी ॥ ६८ ॥ शीता संतर्पणी बल्या पुष्टिदा वीर्यवर्धनी। वह्निमांद्यकरी रक्तपित्तघ्नी तु विषापहा ॥ ६९ स्निग्धा हृद्या तथा प्रोक्ता खर्जूरी पिंडनामका । मदपित्तकरी चैव दीपनी कफवातजित् ॥ ७० ॥ बलशुक्रकरी प्रोक्ता 'भावनामनिघंटके'। २२ चार। म० चार, चाराळी। गु० चारोली । चारः स्वादुः खरस्कंधो ललनश्चारकस्तथा ॥ ७१ ॥ बहुवल्कः प्रियालश्च वनद्रुस्तापसप्रियः। स्नेहबीजश्चापपटो भक्षबीजश्च 'राजके'॥७२॥ ललनाऽम्लफलः शालः सन्नकद्रुर्धनुःपटः । द्राक्षाफलः 'कैयदेवे' मधुराम्लफलो 'गणे' ॥ ७३ ॥ राजादनस्तापसेष्टस्तथा राजादनी 'भावे'। 'मदे' धनुः पटश्चैव पियालो मुनिवल्लभः ॥ ७४ ॥ मुनिप्रियस्तथाऽम्लत्वक्स्नेहो बहुलवल्कलः । गुणाः । चारस्य च फलं पक्वं वृष्यं शैत्याम्लकं गुरु ॥ ७५ ॥ तद्बीजं मधुरं वृष्यं पित्तदाहहरं 'नृपे'। 'कैये' तु कफपित्तघ्नं हिमं स्निग्धं च बृंहणं ॥ ७६ ॥ रक्तपित्तादिवातघ्नं क्षतक्षयहरं तथा । रक्तदोषहरं 'द्रव्ये' 'मदे' 'भावे' तृषापहं ॥ ७७ ॥ विष्टंभि कफदं बल्यं सरं चैव तथा स्मृतं । चारमूलं तु तुवरं रक्तरुक्कफपित्तहृत् ॥ ७८ ॥ तन्मज्जा मधुरा वृष्या पित्तानिलहरा 'धन्वे'। २३ भल्लातक। म० बिब्बा, भिलावा। गु०

भिलामा । भल्लातक्रोऽग्निर्दहनस्तपनोरुष्करोऽनलः ॥ ७९ ॥ कृमिघ्नस्तैल-
बीजश्च वातारिः स्फोटबीजकः । पृथग्बीजो भनुर्वृक्षो भल्लातो बीजपा-
दपः ॥ ८० ॥ वन्हिर्वीरतरुश्चेति विज्ञेयो 'राजनामके'। उष्णोऽग्नि-
कोऽरुष्करश्च धनुरग्निमुखी 'धने' ॥ ८१ ॥ अरुष्को व्रणकृद्भल्ली स्फोट-
हेतुश्च 'कैयके'। वीरवृक्षोऽग्निवक्त्रश्च शोफकृत् स्मदने' स्मृतः
॥ ८२ ॥ 'गणे' स्फोटकरश्चैव क्षतकृत्परिकीर्तितः। भशोहितो निर्द-
हनो महातीक्ष्णश्च रजकः ॥ ८३ ॥ रक्तहरः स्नेहबीजश्चानलो
मृतनाशनः। अन्तःसत्त्वा शाफकरो दुर्दर्गो भेदनोऽग्निक' ॥ ८४ ॥
गुणाः । भल्लातकः कटुस्तिक्तः कषायोष्णः कृमीञ्जयेत ।
कफवातोदरानाहमेहदुर्नामनाशनः ॥ ८५ ॥ भल्लातकफल कोष्ण कषाय
मधुर स्मृत । श्वासानाहविबन्धघ्न श्रमशूलकफार्तिजित् ॥ ८६ ॥ जठरा-
ध्मानकृमिघ्नश्च तन्मज्जा शोषदाहहृत्। पित्तघ्नी तर्पणी वातारोचकघ्नी
तु दीपनी ॥ ८७ ॥ 'नृपे' प्रोक्ता तथा 'द्रव्ये' गुल्मवातहरा स्मृता।
कृमिघ्ना शुक्रला वृष्या वातश्लेष्महरा गुरुः ॥ ८८ ॥ व्रणज्वरश्वासकुष्ठ-
ग्रहणीवह्निमायजित्। २४ क्षीरी। म० खिरणी, राजणी। गु०
रायणी। राजादनो राजफलः क्षीरवृक्षो नृपद्रुमः ॥ ८९ ॥ निम्बबीजो
मधुफलः कपीष्टो माधवोद्भवः। क्षीरी गुच्छफलः प्रोक्त. शुकेष्टो राज-
वल्लभः ॥ ९० ॥ श्रीफलोऽथ दृढस्कधः क्षीरशुक्लस्तु 'राजके'। राजा-
दनी क्षीरशुक्ला राजन्यः क्षीरशुक्लकः ॥ ९१ ॥ 'धन्वन्तरिनिघंटे' तु
नृपश्च प्रियदर्शनः। फलाध्यक्षो गुरुस्कधः क्षत्रियो वानरप्रियः ॥ ९२ ॥
इक्ष्वाकुः श्रीफलो राजपलाशी च। तथा स्मृतः। मदनकः पलाशी च
राजाह्वः 'कैयदेवके' ॥ ९३ ॥ तथा 'मदनपाले' तु चिबुके मृचि-
लिदक.। दुग्धफला तथा प्रोक्ता शाखामृगप्रियो 'गणे' ॥ ९४॥ श्यामबीजो
राजफलः फलाक्षी क्षीरिणी तथा। दृढशाखी क्षीरिका च प्रोक्ता वैद्यवि-
शारदै. ॥ ९५ ॥ गुणाः। राजादनी तु मधुरा पित्तहृद्गुरुतर्पणी। वृष्या
स्थौल्यकरी हृद्या स्निग्धा मेहहरा 'नृप' ॥ ९६ ॥ वातघ्नी शीतला

रुच्या प्रोक्ता 'धन्वनरौ' अत्र । तृष्णामूर्च्छाश्रमघ्नी च त्रिदोषघ्नी क्षयापहा ॥ १७ ॥ [illegible] । २५ दाडिम ।
म० दाळिंब, डाळिंब । गु० दाडिम । दाडिमो दाडिमीसारः कुट्टिमः फलशाडवः ॥ १८ ॥ करको रक्तबीजश्च सुफलो दन्तबीजकः । मधुबीजः कुचफलो रोचनः शुकवल्लभः ॥ १९ ॥ मणिबीजस्तथा वल्कफलो वृत्तफलश्च सः । सुनीलो नीलपत्रश्च 'राजनामनिघण्टके' ॥ ३२० ॥ स्वाद्वम्लश्च तथा 'धन्वे' 'भावे' लोहितपुष्पकः । स्याद्रक्तकुसुमः 'कैये' मधुराम्लः शुकप्रियः ॥ १ ॥ तथा दशनबीजा च रक्तपुष्पा तु 'द्रव्यके' । दाडिंबः पर्वरुट् पिंडपुष्पः पिंडीरडालिमौ ॥ २ ॥ **गुणाः** । दाडिम मधुरं चाम्लं कषायं कासनाशनं । वातादिकफपित्तघ्नं ग्राहि दीपनशीतलं ॥ ३ ॥ श्रमघ्नं लघु चोष्णं च रुच्यं ज्वरहरं स्मृतं । दाडिमं द्विविधं ज्ञेयमम्लं तु मधुरं तथा ॥ ४ ॥ कफवातहरं चाम्लं तापजिन्मधुरं 'नृपे' । हृद्यं मेध्यं कठगवक्त्रशोषघ्नं 'कैयदेवके' ॥ ५ ॥ २६ **तिंदुक** । म० टेंभुरणी । गु० टींबरु । तिंदुको नीलसारश्च कालस्कंधोऽतिमुक्तकः । स्फूर्जका रामणश्चैव स्फूर्जनः स्यंदनाह्वयः ॥ ६ ॥ 'नृपे' 'धन्वे' रवः सृष्टः स्यंदनो रावणस्तथा । रमणः कालसारश्च स्यदिता चातिमुक्तका ॥ ७ ॥ विस्फूर्जनी दीर्घनखी तिंदुकी विरला वरः । तिंदुलः पेंडुकस्तिदुर्विस्फुरणी तु 'कैयके' ॥ ८ ॥ तथा 'भावप्रकाशे' च प्रोक्ता चासितसारका । 'ततस्त्वमरकोशे' च सम्प्रोक्तः शितिसारकः ॥ ९ ॥ **गुणाः** । तिंदुकस्तु कषायः स्यात्सग्राही वातकृत्परः । पक्वस्तु मधुरः स्निग्धो दुर्जरः श्लेष्मलो 'नृपे' ॥ १० ॥ 'कैये' वातव्रणघ्नश्च 'धन्वे' तु कफपित्तजित् । तत्सारः पित्तरोगघ्नः प्रोक्तो 'मदनपालके' ॥ ११ ॥ 'भावेऽ' पक्वफलं प्रोक्तं ग्राहि शीतलवातलं । सग्राहि शीतलं रूक्षं विषघ्नारुचिवातकृत् ॥ १२ ॥ बलासपित्तजित्पक्वं फलं प्रोक्तं तु 'कैयके' । 'मदे' स्वर्शःप्रमेहघ्नं श्लेष्मदं विषदं गुरु ॥ १३ ॥ २७ **काकतिंदुक** । म० काकटेंभुरणी, काटेंभुरणी । गु० कागडोळो टिंबरवो ।

तिंदुकोऽन्यः काकपीलुः काकाडः काकतिंदुकः ॥ १४ ॥ कालस्फूर्जश्च काकाडः कुपीलुः काकपीलुकः। प्रोक्तो ' राजनिघंटेऽके ' तु काकेंदुकी तु ' कैयके ' ॥ १५ ॥ काकेंदुकः काकतिंदुर्धन्वे ' मर्कट-तिंदुकः। जलजः कालतिंदुश्च कुलको दीर्घपत्रकः ॥ १६ ॥ काकेंदुर्विष-तिंदुश्च कालपीलुस्तु ' भावके ' ॥ **गुणाः** । तिंदुकश्च कषायोऽम्लो गुरुर्वातविकारकृत् ॥ १७ ॥ पक्वस्तु मधुरः किंचित्कफक्रत्पित्तवातिहृत्। ' नृपे ' ' कैये ' तु शीतश्च ' मदे ' ग्राही प्रकीर्तितः ॥ १८ ॥ भाव-प्रकाशे ' मदकृत्कफपित्तास्रहृत्तथा । २८ **अक्षोट। म०** अक्रोड। **गु०** अखोड । अक्षोटः पार्वतीयश्च फलस्नेहो गुडाशयः ॥ १९ ॥ कीरेष्टः कन्दरालश्च मधुमज्जा बृहच्छदः।' नृपे ' ' धन्वे ' तु आक्षोडः कर्परालः पृथुच्छदः ॥ २० ॥ स्वादुमज्जा तु सम्प्रोक्तस्तथा ' द्रव्यनिघंटके। 'अक्षो-टकी वृत्तफलो मदनाह्वः स्वरामकः ॥ २१ ॥ आक्षोटः ककरोलश्च प्रोक्तो ' मदनपालके'। पीलुः शैलभवश्चैव प्रोक्तो ' भावप्रकाशके ' ॥२२॥ रेखाफलस्तथाऽक्षोडश्चाखोटश्च पृथक्च्छदः ९८ **गुणाः**। अक्षोटो मधुरो बल्यः स्निग्धोष्णो वातपित्तजित् ॥ २३ ॥ शीतलो रक्तदोषघ्नः कफकृ-द्राजनामके ')' द्रव्यरत्ने ' सरः ' प्रोक्तो ' गणे ' हृद्रोगनाशनः॥२४॥ रसे पाके च मधुरः स्निग्धश्च गुरुबृंहणः। वृष्यो बल्यश्च विष्टंभी रोचनो हृद्य एव च ॥२५॥ रक्तक्षयहरश्चैव वातदाहहरः ' कैये '।२९ **लघुपीलु। म०** लहान पीलु, मिरीचें झाड । **कों०** खारीकिंकणः । **गु०** खारी जाल्य, महाना पीलु । पीलुः शीतसहा स्रसी धानी गुडफलोऽपि च ॥ २६ ॥ विरेचनफलः शाखी श्यामः करभवल्लभः । ' नृपे ' ' धन्वे ' तु धारी च तथैव करभप्रियः ॥ २७ ॥ सहस्राङ्गी सहस्राशी ' कैये ' तीक्ष्णतरुस्तथा । **गुणाः** । लघुपीलुस्तु कटुकः कषायो मधुराम्लकः ॥ २८ ॥ सरः स्वादुश्च गुल्मार्शःशमनो दीपनो 'नृपे '। ' मदे ' वाता-स्रकफहा ' गणे ' तु वह्निदीपन' ॥ २९ ॥ रक्तपित्तकरश्चैव बस्तिरो-गहरस्तथा । तत्स्नेहः कफवातघ्नः प्रोक्तो ' धन्वनिघंटके ' ॥ ३० ॥

कफवाताश्मरीप्लीहगरदोषोदरघ्नकः । आनाहघ्नो भिषक्श्रेष्ठैः प्रोक्तः ' कैयनिघंटके ' ॥ ३१ ॥ ३० बृहत्पीलु । म० थोर पीलू । गु० मोटी जाल्य, मोटा पीलु । अन्यश्चैव बृहत्पीलुर्महापीलुर्महाफलः । राजपीलुर्महावृक्षो मधुपीलुस्तु ' राजके ' ॥ ३२ ॥ गुणाः । मधुरस्तु महापीलुर्वृष्यो विषविनाशनः । पित्तप्रशमनो रुच्य आमघ्नो दीपनो ' नृपे ' ॥ ३३ ॥ ३१ पारेवत । म० उत्तरी, पालेवत, लघु द्वीपांतर खजूरी । गु० पालेवत । पारेवतं रैवतकमारेवतमतः परं । ततोऽमृतफलाख्यं च तथा रैवतकं मतं ॥ ३४ ॥ पारेवतकसंज्ञं च ज्ञेयं मधुफलं ' नृपे ' । पालेवतं तु संप्रोक्तं तिंदुकाभफलं मतं ॥ ३५ ॥ सितपुष्पं तथा ज्ञेयं ' धन्वंतरिनिघंटके ' । तिंदुकाकृतिफलं प्रोक्तं ' सिद्धमंत्रनिघंटके ' ॥ ३६ ॥ तथा च सिद्धमंत्रे । " पालेवतं मधुरमम्लमिति द्विधा स्यात्तिंदुकातिफलं लघुपांडुपुष्पं । नीलच्छदाग्निकथितमृपरेवताख्यं तत्पुष्कराश्रमसमीपवने प्रसिद्धं " ॥ ३७ ॥ गुणाः । पारेवतं स्मृतं रुच्यं मधुरं कृमिवातजित् । वृष्यं हृद्यं ज्वरघ्नं च तृष्णादाहहरं तथा ॥ ३८ ॥ मूर्च्छाभ्रमविशोषघ्नं स्निग्धं वीर्यकरं ' नृपे ' । कफकृत् ' द्रव्यरत्ने ' च ' मदे ' शीतं गुरूष्णकं ॥ ३९ ॥ ' गणे ' तु वह्निशमनं संप्रोक्तं वैद्यनायकैः । ३२ महापारेवत । म० माणवक, थोर द्वीपांतर खजूरी । महापारेवतं चैव स्वर्णपारेवतं तथा ॥ ४० ॥ संप्राडनी खारिकं च रक्तरैवतकं तथा । बृहत्पारेवतं द्वीपखर्जूरी द्वीपजं ' नृपे ' ॥ ४१ ॥ ततो माणवकं चैव महत्पालेवतं ' मदे ' । रक्तपालेवतं प्रोक्तं ' धन्वंतरिनिघंटके ' ॥ ४२ ॥ गुणाः । महापारेवतं गौल्यं बलकृत्पुष्टिवर्धनं । वृष्यं मूर्च्छाज्वरघ्नं च प्रोक्तं ' राजनिघंटके ' ॥ ४३ ॥ अल्पाग्निवातहृच्चैव प्रोक्तं ' कैयनिघंटके ' । ३३ मधुकः । म० मोहाचा वृक्ष । गु० महुडो । मधुको मधुवृक्षश्च मधुष्ठीलो मधुस्रवः ॥ ४४ ॥ गुडपुष्पो लोध्रपुष्पो वानप्रस्थश्च माधवः । ' नृपे ' ' कैये ' तथा एलाफलश्चैव महाद्रुमः ॥ ४५ ॥ वनवासस्तीक्ष्णसारो मधुरो गुडपुष्पकः । ' मदे '

टोलाफलश्चैव मधुकाष्ठो मधुद्रुमः ॥ ४६ ॥ मधुपुष्पो मधूकश्च मधुश्चैव तथा स्मृतः । गुणाः । मधुकं मधुरं शीतं पित्तदाहश्रमापहं ॥ ४७ ॥ वातलं जंतुदोषघ्नं वीर्यपुष्टिविवर्द्धनं । बृंहणीयमहृद्यं च मधुककुसुमं गुरु ॥ ४८ ॥ वातपित्तोपशमनं फलं तस्य तु 'राजके'। 'द्रव्ये' विषापहश्चैव 'मदे' तु व्रणरोपणः ॥ ४९ ॥ 'कैये' तु तुवरं प्रोक्तो व्रणवातकफापहः। तत्पुष्पं मधुरं शीतं तत्फलं गुरु चाष्णकं ॥ ५० ॥ विष्टंभि बृंहणं बल्यं कफकृन्मारुतापहं। रक्तपित्ततृषाघ्नं च दाहश्वासक्फापहं ॥ ५१ ॥ क्षतक्षयहरं प्रोक्तं बल्यं पक्वं फलं तथा । ३४ जलमधूक। म० जलमोहवृक्ष । गु० जलमहुडो। ततो जलमधूकश्च मधूल्यो दीर्घपत्रकः ॥ ५२ ॥ क्षौद्रप्रियः पतंगश्च कीरेष्टो गौरिकाख्यकः । मधुपुष्पस्तथा प्रोक्तो 'राजनामनिघंटके' ॥ ५३ ॥ जलजो ह्रस्वपुष्पश्च गौरिका च मधूलिका । जलाख्या 'धन्वकोशे' तु 'कैये' ह्रस्वफलस्तथा ॥ ५४ ॥ मधूलो गौरशाखी च मधूली च मधूलकः । मध्वंगश्चैव स्वादुश्च समोक्तो वैद्यनायकैः ॥ ५५ ॥ गुणाः। मधुपुष्पं हिमं वृष्यं हृद्यं पित्तविदाहहृत् । फलं चैव तथा वातपित्तघ्नं 'राजनामकं' ॥ ५६ ॥ ३५ भव । म० न्हीव, काकणात प्रसिद्ध । गु० रोमफल, ओटफल । भवं भव्यं भविष्यं च भावनं वक्त्रशोधनं । तथा पिच्छलबीजं च तच्च रोमफलं 'नृपे' ॥ ५७ ॥ रोमातिकं पिच्छलं च 'कैयदेवनिघंटके'। आविकं सपुटांगं च तथैव कुसुमोदरं ॥ ५८ ॥ गुणाः। भव्यमम्लं कटूष्णं च बालं वातकफापहं । पक्वं तु मधुराम्लं च रुचिकृद्भ्रमशूलहृत् ॥ ५९ ॥ 'नृपे' 'कैये' तु विशदं हृद्यं मुखविशोधनं । वातलं शीतलं ग्राहि रक्तच्छर्दिहरं भवं ॥ ६० ॥ कफपित्तहरं चैव विष्टंभाध्मानकृत् भवं । ३६ आरुक । म० आलुबुखार। ग० आलु । आरुकं वीरसेनं तु वीरं वीरारुकं 'नृपे' ॥ ६१ ॥ तच्च विद्याच्चतुर्जाति पत्रपुष्पादिभेदतः । गुणाः । आरुकं मधुरं शीतं रक्तदोषहरं परं ॥ ६२ ॥ अर्शःप्रमेहगुल्मघ्नं 'राजनामनिघंटके'। 'कैये' तु

तुवरं भेदि गुरूष्णं कफपित्तजित् ॥ ६३ ॥ पक्वं फलं बृंहणं च रोचनं गुरुशोधनं । वातज्वरहरं चैव कफघ्नं ' मदने ' स्मृतं ॥ ६४ ॥ ३७ **द्राक्षा ।** म० द्राक्षा । गु० धराख । द्राक्षा चारुफला कृष्णा प्रियाला तापसप्रिया । गुच्छफला रसाला च तथाऽमृतफला ' नृपे ' ॥ ६५ ॥ " अन्या साऽम्ला तु वनजा सा प्रोक्ता करमर्दिका " । **गुणाः ।** द्राक्षातिमधुराऽम्ला च शीता पित्तार्तिदाहजित् ॥ ६६ ॥ मूत्रदोषहरा रुच्या वृष्या संतर्पणी ' नृपे ' । हृद्या स्वर्या तु स्निग्धा च तृष्णाश्वासक्षयापहा ॥ ६७ ॥ रक्तपित्तज्वरघ्नी च प्रोक्ता ' धन्वनिघंटके ' । ३८ **गोस्तनी ।** म० काळीं द्राक्षें । गु० काळी द्राख । मृद्वीका गोस्तनी हैमवती दीर्घफला हिमा ॥ ६८ ॥ स्यात्कपिलफला मृद्वी चोत्तरापथिका तथा । काश्मीरी शतवीर्या च मधूली सुफला मता ॥६९॥ हारहूरा च कपिलद्राक्षा तु हरिता तथा । स्यादमृतरसा ज्ञेया तथा मधुफला स्मृता ॥ ७० ॥ मधुवल्ली ' नृपे ' प्रोक्ता ' धन्वे ' मधुरसा स्मृता । स्वाद्वी तु कपिला ' कैये ' गुडा कृष्णा फलोत्तमा ॥ ७१ ॥ स्वादुफला महायोनिर्बृंहणी मधुसंभवा । गोस्तना तु तथा प्रोक्ता यक्ष्मघ्नी मधुवल्लरी ॥ ७२ ॥ **गुणाः ।** गोस्तनी मधुरा शीता हृद्या च मदहर्षणी । दाहमूर्च्छाज्वरश्वासतृषाहृल्लासजि ' न्नृपे ' ॥ ७३ ॥ स्निग्धानुलोमनी वृष्या रक्तवातश्रमापहा । श्वासकासहरा प्रोक्ता ' धन्वंतरिनिघंटके ' ॥ ७४ ॥ ३९ **काकलीद्राक्षा ।** म० किसमिस, बेदाणा । गु० किसमिस । अन्या सा काकलीद्राक्षा जंबुका च फलोत्तमा । लघुद्राक्षा च निर्बीजा सुवृत्ता रुचिकारिणी ॥ ७५ ॥ **गुणाः ।** शिशिरा श्वासहृल्लासनाशिनी जनवल्लभा । **द्राक्षाविशेषगुणाः ।** द्राक्षाबालफलं कटूष्णविशदं पित्तास्रदोषप्रदं । मध्यं चाम्लरसं रसान्तरगते रुच्याग्निवह्निप्रदं ॥ पक्वं चेन्मधुरं तथाऽम्लसहितं तृष्णास्रपित्तापहं । पक्वं शुष्कतमं श्रमार्तिशमनं संतर्पणं पुष्टिदं ॥ ७६ ॥ शीता पित्तास्रदोषं दमयति मधुरा स्निग्धपाकाऽतिरुच्या चक्षुष्या श्वासकासश्रमवमिशमनी शोफतृष्णाज्वरघ्नी।

दाहाध्मानभ्रमादीनपनयति परा तर्पणी पक्वशुष्का द्राक्षा सुक्षीणवीर्या-नपि मदनफलाफलिदस्त्विचेत्त ॥ ७७ ॥ प्रोक्ता ' राजनिघंटे ' तु वैद्यविद्याविशारदैः ॥ ७८ ॥ ४० **कर्मार** । म० कर्मर । गु० कमरक। कर्मारकः कर्मरकः कर्मारः कर्मरस्तथा । धाराफलः पीतफलः स्यान्मुद्गरफलः स्मृतः ॥ ७९ ॥ तथा मुद्गरकः प्रोक्तो ' राजनामनिघंटके ' । कर्परग नामफल भव्य पिच्छलबीजक ॥ ८० ॥ प्रोक्त ' मदनपाले ' तु भिषग्विद्याविशारदैः । **गुणाः** । कर्मारकोऽम्ल उष्णश्च वातहृत्पित्तकारकः ॥ ८१ ॥ पक्वस्तु मधुराम्ल-स्याद्बलपुष्टिरुचिप्रदः । ' नृपे ' प्रोक्ता ' मदे ' चैव कफवातहरस्तथा ॥ ८२ ॥ ४१ **परूषक** । म०, गु० फालसा । परूषक नीलपर्णं गिरिपीलु परावर । नीलमंडलमल्पास्थि परुष च परु ' नृपे ' ॥ ८३ ॥ परिमंडलमध्यास्थि नील-वर्णं परापर । परूष चैव ' धन्वे ' तु ' गणे ' म्रार्दातमंडल ॥ ८४ ॥ मृदुफल तथा ' कैय ' रोपण धन्वनच्छद । नागरङोपम चैव प्रोक्त वैद्यविशारदैः ॥ ८५ ॥ **गुणाः** । परूषक च कट्वम्ल चामं पित्तकर तथा । कफवातापह चैव सोष्ण पक्व रुचिप्रद ॥ ८६ ॥ मधुर तर्पणं पित्तशोफघ्न ' राजनामके ' । ' भावे ' पक्वफल प्रोक्त ज्वरक्षयसमीर-जित् ॥ ८७ ॥ ' कैये ' तु शुष्कल शीत हृद्य विष्टंभि बृंहण । वाता-दिपित्तरक्तघ्न तृष्णादाहहरं तथा ॥ ८८ ॥ ४२ **अश्वत्थ** । म० पिंपळ । **गु०** पीपळो । अश्वत्थश्चाच्युतावासश्चलपत्रः पवित्रकः । शुभदो बोधि-वृक्षश्च याज्ञिको गजभक्षकः ॥ ८९ ॥ श्रीमान्क्षीरद्रुमो विप्रो मंगल्यः श्यामलश्च सः । पिप्पलो गुह्यपत्रश्च सेव्यः सत्यः शुचिद्रुमः ॥ ९० ॥ चैत्यद्रुगो धन्यवृक्षो ' राजनामनिघंटके ' । गजाशनो वन्यवृक्षस्तथैव श्यामलच्छदः ॥ ९१ ॥ ' धन्वे ' तु केशवावासः ' कैये ' तु क्षीर-पादप. । बोधिसत्त्वश्च लक्ष्मीवान् बोधिश्च स्वादुबीजकः ॥ ९२ ॥ बोधि-द्रुश्च तथा ' द्रव्ये ' श्रीवृक्षो द्विरदाशनः । महाद्रुमो नागमधुर्देवात्मा केशवालयः ॥ ९३ ॥ कृष्णावासश्चलद्दलश्चैत्यद्रुर्बोधिपादपः । हरि-वासस्तथा बोधितरुः स्यात्कुजराशनः ॥ ९४ ॥ **गुणाः** । अश्वत्थो

' गणे ' । ४८ नद्युदुंबरिका । म० नदी उंबर । गु० नदी उंबरो । नद्युदुंबरिका चान्या लघुपत्रफला तथा ॥ २८ ॥ लघूहेमदुघा प्रोक्ता लघुपूर्वसद्‌फला । लघ्वाद्युदुंबराह्वा स्यात्प्रोक्ता ' राजनिघंटके ' ॥ २९ ॥ गुणाः । रसवीर्यविपाकेषु किंचिन्न्यूना च पूर्वतः ॥ ४९ कृष्णोदुंबरिका । म० काळा उंबर, भुई उंबर । कों० बोखाडा, गांझ्या उंबर । गु० ढेढ उंबरो, गांडा उंबरो । कृष्णोदुंबरिका चान्या खरपत्री शिवाटिका ॥ ३० ॥ उदुंबरी च कठिना कुष्ठघ्नी फल्गुवाटिका । अजाक्षी फल्गुनी चैव मलयूश्वित्रभेषजा ॥ ३१ ॥ काकोदुंबरिका चैव ध्वांक्षनाम्नी तु ' राजके ' । फल्गुनी फलसंभारा राजफल्गुस्तु ' धन्वके ' ॥ ३२ ॥ फल्गुफल्गुः फल्गुवाटी फलिनी जघने फला । उदुंबरी तथा ' कैये ' मलपूर्मूलकर्कटी ॥ ३३ ॥ मंदारफलिका प्रोक्ता वायसी ' गणनामके ' । कर्कशच्छदना यूका स्वसुमा हेमदुग्धिका ॥ ३४ ॥ उदुंबरफला भद्रा काकश्च खरपत्रिका । क्षुद्रोदुंबरिका चैव भद्रोदुंबरिका तथा ॥ ३५ ॥ तथा बहुफला क्षुद्रोदुंबराश्वित्रभेषजा । गुणाः । काकोदुंबरिका शीता पक्वा गौल्याऽम्लिका कटुः ॥ ३६ ॥ त्वग्दोषपित्तरक्तघ्नी तद्वत्स्नाचातिसारजित् । उदुंबरत्वचा शीता कषाया व्रणनाशिनी ॥ ३७ ॥ गुर्विणीगर्भसंरक्षे हिता स्तन्यप्रदा ' नृपे ' । ' कैये ' तु तुवरा तिक्ता स्तंभिनी कफपित्तजित् ॥ ३८ ॥ व्रणादिश्वित्रकुष्ठघ्नी कामलापांडुनाशनी । तत्फलं तर्पणं ग्राहि विष्टंभि दाहनाशनं ॥ ३९ ॥ बृंहणं तु त्रिदोषघ्नं कफरक्तहरं तथा । त्वग्दोषशोफजित्प्रोक्तं 'द्रव्यरत्नाकरे ' ध्रुवं ॥ ४० ॥ ५० बदरी । म० बोर । गु० बोरडी । बदरो बदरी कोलः कर्कंधूः फेनिलः स्मृतः । सौवीरको गुडफलो बालेष्टः फलशैशिरः ॥ ४१ ॥ दृढबीजो वृत्तफलः कंटकी वक्रकंटकः । सुबीजः सुफलः स्वच्छः प्रोक्तो ' राजनिघंटके ' ॥ ४२ ॥ कोला कोलिर्गुंडा कोली राष्ट्रवृद्धिकरी ' गणे ' । कर्कंधुर्बदरिः प्रोक्ता तथा गृध्रनखी स्मृता ॥ ४३ ॥ फलं तु बदरं कोलं सौवीरं फेनिलं कुहं । कर्कंधुकं

कोशफलं कोलकं कुवलं तथा ॥ ४४ ॥ कोलात्मजः स्वादुकं च प्रोक्तं वैद्यविशारदैः । **गुणाः** । बदरं चाम्लमधुरं, कषायं पक्कमेव च ॥ ४५ ॥ उष्णं रुचिकरं रक्तश्रमशोषार्तिनाशनं । अतिसारहरं प्रोक्तं पाचनं तु तथा स्मृतं ॥ ४६ ॥ बदरस्य पत्रलेपो ज्वरदाहविनाशनः । त्वचा विस्फोटशमनी बीजं नेत्रामयापहं ॥ ४७ ॥ कफवातहरं चैव पित्तानिलहरं ' धने ' । ' कैये ' मज्जा वीर्यदा च श्वासकासतृषापहा ॥ ४८ ॥ दाहच्छर्दिहरा प्रोक्ता वातपित्तहरा तथा । **५१ राजबदर** । **म०** रायबोर । **गु०** रायबोरडी । नृपेष्टो राजबदरः स्यान्नृपबदरस्तथा ॥ ४९ ॥ स्याद्राजवल्लभश्चैव मधुरः फल एव च । पृथुकोलो राजकोलस्तनुबीजस्तथा ' नृपे ' ॥ ५० ॥ स्निग्धच्छदा कोशफला हस्तिकोलीति ' द्रव्यके ' । सौवीरिका तथा प्रोक्ता वैद्ये'मदनपालके '॥ ५१ ॥ **गुणाः** । मधुरो राजबदरो दाहपित्तानिलापहः । वृष्यः शीतो वीर्यदश्च श्रमशोषहरो ' नृपे ' ॥ ५२ ॥ **५२ भूबदरी** । **म०** भूयबोर, चणबोर । **गु०** चणिया बोर । भूबदरी क्षितिबदरी बल्लीबदरी च बदरिवल्ली च । बहुफलिका लघुबदरी बदरफली सूक्ष्मबदरी च ॥ ५३ ॥ प्रोक्ता ' राजनिघंटे ' तु भिषक्शास्त्रज्ञपंडितैः । तथा ' मदनपाले ' तु लघ्वी कर्कंधुका धुका ॥ ५४ ॥ **गुणाः** । तथा भूबदरी चाम्ला मधुरा कफवातजित् । दीपनी पाचनी रुच्या किंचित्पित्तास्रकारिणी ॥ ५५ ॥ **५३ लघुबदर** । **म०** क्षुद्रबोर , बोराटी । **गु०** नहानी बोरडी । सूक्ष्मफलो बदरोऽन्यो बहुकटः सूक्ष्मपत्रको दुस्पर्शः। मधुरः शबराहारः शिखिप्रियश्चैव निर्दिष्टः॥ ५६ ॥**गुणाः** । लघुबदरं मधुराम्लं पक्वं कफवातनाशनं रुच्यं । स्निग्धं तु जन्तुकारकमीषत्पित्तार्तिदाहशोषघ्नं ॥ ५७ ॥ प्रोक्तं ' राजनिघंटे ' तु वैद्यविद्याविशारदैः । ' कैये ' तु शुष्कबदरीतृषाऽऽमघ्नी च दीपनी ॥ ५८ ॥ श्लेष्ममारुतपित्तघ्नी वैद्यैः प्रोक्ता न संशयः । **५४ बीजपूर** । **म०** महाळुंग । **गु०** बीजोरु । बीजपूरो बीजपूर्णः पूर्णबीजः सुकेसरः ॥ ५९ ॥ बीजकः कसराम्लश्च मातुलिंगः सुपूरकः । रुचको

बीजफलको जन्तुघ्नो दंतुरत्वचः ॥ ६० ॥ पूरको रोचनफलो 'नृपे' प्रोक्तस्तथा 'धने'। कृमिघ्नो मातुलुंगश्च केशरी फलपूरकः ॥ ६१ ॥ अम्लोऽम्लको वराम्लश्च लुंगको बीजपूरकः। तथाम्लकेशरः प्रोक्तो मध्यकेशर एव च ॥ ६२ ॥ बीजाह्वः पूरकाह्वश्च संप्रोक्तो वैद्यनायकैः। गुणाः। बीजपूरफलं त्वम्लं कटूष्णं श्वासकासजित् ॥६३॥ कंठशुद्धिकरं हृद्यं दीपनं वातनाशनं। रुच्यं 'नृपे' तथा 'धन्वे' तुण्णाग्रं 'कैयदेवके' ॥ ६४ ॥ जिह्वाहृच्छोधनं श्वासकफकासवमिघ्नकं। शूलघ्नं 'द्रव्यरत्ने' च दीपनाम्लं तु केसरं ॥ ६५ ॥ लघु संग्राहि गुल्मघ्नमर्शोहृद्रोगश्वासजित्। विबंधाजीर्णकासघ्नं ग्रहणीनाशनं 'नृपे' ॥६६॥ अग्निदीपनकृच्चैव रक्तपित्तकरं 'धने'। शूलहिध्मोदरघ्नं च मदात्ययहरं तथा ॥ ६७ ॥ रक्तमांसादिबलकृद्दृष्यं वर्ण्यं रुचिप्रदं। मंदाग्निकफवातघ्नं श्वासकासापचिघ्नक ॥ ६८ ॥ वीर्यदं पित्तवातघ्नं पार्श्वहृद्बस्तिशूलजित्। 'कैये' प्रोक्तं 'नृपे' चैव तद्बीजं तिक्तकं भवेत् ॥ ६९ ॥ गुल्मार्शःश्वयथुहारि 'कैये' तुष्णं कृमिघ्नकं। दुर्जरं गर्भदं मूर्च्छामदभ्रमकरं तथा ॥ ७० ॥ वातश्लेष्महरं बल्यं पित्तानिलहरं 'द्रवे'। तत्पत्रं शीतलं ग्राहि रक्तपित्तहरं 'मदे' ॥ ७१ ॥ तत्फलं मध्यमं बालं त्रिदोषादिकरं 'नृपे'। पक्क फल वर्णकरं हृद्यं पुष्टिबलादिकृत् ॥ ७२ ॥ शूलाजीर्णविबंधघ्नं कफवातहरं ध्रुवं। श्वासकासाग्निमांद्यघ्नं शोफारुचिहरं 'नृपे' ॥ ७३ ॥ त्वचा तिक्ता दुर्जरा च कृमिघ्नी कफवातजित्। स्निग्धोष्णा तु 'नृपे' प्रोक्ता 'कैये' कट्वी प्रकीर्तिता ॥ ७४ ॥ गुर्वी शीता स्वादु 'धन्वे' मांसमारुतरोगजित्। 'द्रव्ये' तु पित्तला प्रोक्ता त्वचा मध्यगता 'नृपे' ॥७५॥ रुच्या वातहरा शूलकंठजाठररोगजित्। अग्निकृच्छर्दिकफहृत्प्रोक्ता 'धन्वनिघंटके' ॥७६॥ 'कैये' स्वादुर्गुरुः शीता बृंहणी श्लेष्मला स्मृता। तन्मूलं कफकृत्प्रोक्तं दुर्जरं कटु पाचकं ॥७७॥ कृमिगुल्महरं प्रोक्तं 'राजनामनिघंटके'। तत्पुष्पं रक्तपित्तघ्नं शीतलं ग्राहि वातजित् ॥ ७८ ॥ 'कैये' विषूचिशूलघ्न

मूल त्वशोविषवर्जित् । ५५ वनबीजपूर । म० रानमहाळुंग । गु० जंगली बिजोरु । वनबीजकपूरश्च वनजो वनपुरक ॥ ७९ ॥ अत्यम्लो वनबीजश्च गधाढ्या तु वनाद्भवा । देवदूती देवदासी दवेटा मातुलुंगिका ॥ ८० ॥ पीता तु पचनी प्रोक्ता 'राजनाम्नि' महाफला । **गुणा** । वनबीजः कटूष्णोऽम्लो रुचिदो वातनाशन ॥ ८१ ॥ आमदापक्रमिघ्नश्च कफश्वासहरो ' नृपे ' । ५६ **मधुकर्कटी । म०** पपई पोपई । गु० पोपैयो, झाडचीभडी । मधुबीजकपूरश्च मधुपर्णी महाफला ॥ ८२ ॥ मधुवल्ली वर्धमाना ज्ञेया मधुरकर्कटी । तथा मधुफला प्रोक्ता मधुकर्कटिका ' नृपे ' ॥ ८३ ॥ स्वादुमज्जा तथा प्रोक्ता स्वाद्वी तु स्वादुकर्कटी । घटालिका स्वादुलिगी मधुकर्कटिका ' कये ' ॥ ८४ ॥ ' द्रव्ये ' घटा तथा प्रोक्ता मधुरा नलिकादलः । एरडचिर्भिटो वृक्षचिर्भिटस्तु घटा तथा ॥८५॥ मध्वेरडस्तु सप्रोक्तो वातकभफलस्तथा । **गुणा** । मधुकर्कटिका स्वादु शिशिरा गुरुदुर्जरा ॥८६॥ निद्रे पघ्नी तु दाहघ्नी रुच्या वृष्या च 'राजके '। 'धन्व' पित्तास्रजित्प्रोक्ता भ्रमघ्नी 'भावनामके' ॥८७॥ क्षयघ्नी श्वासकासघ्नी हिध्माजि'त्के-पदेत्के' । ५७ **आमलकी । म०** आवळी । गु० आवळां । आमलकी वयस्था च श्रीफला धात्रिका तथा ॥ ८८ ॥ अमृता च शिवा शान्ता शीताऽमृतफला तथा । जातीफला च धात्रेयी ज्ञेया धात्रीफला तथा ॥८९॥ वृष्या वृत्तफला चैव रोचनी 'राजनामके'। आमलका तु सप्रोक्ता जातीफलरसा 'धने' ॥९०॥ तिष्य तिष्यफला धात्री धारा वि-याऽमृतोद्भवा । तिष्यपुष्पा साधुफला 'केवदेवनिघटके' ॥ ९१ ॥ तथाऽकराऽमला शीतफला वृष्यफला स्मृता । पचरसा तु कायस्था प्रोक्ता बहुफला तथा ॥ ९२ ॥ शुक्तिश्चैव तथा ज्ञेया सा शुष्कामलकी मता । फल त्वामलक तिष्य जातीफलरस शिव ॥ ९३ ॥ धात्रीफल श्रीफल च शकल चामृतोद्भव । वृष्य त्वामलकश्चैव तथाऽमृतफल मत ॥ ९४ ॥ **गुणाः** । आमलक कषायाम्ल

मधुर शिशिरं लघु । दाहपित्तवमीमेहशोफघ्न च रसायन ॥ ९५ ॥ कषाय मधुर किंचिदम्ल रुचिकर कटु । कफघ्नमतिशीत च पित्तास्रघ्न श्रमघ्नक ॥ ९६ ॥ विबंधाध्मानविष्टंभनाशन च फल ' नृपे '। 'द्रव्ये' केश्या सरा वृष्या छर्दिघ्नी मेहहृत्स्मृता ॥ ९७ ॥ अम्लत्वात्पवन हन्ति पित्त माधुर्यशैत्यतः । कफ रूक्षकषायत्वात्त्रिदोषघ्न फल ' मदे '॥९८॥ ग्रमसंधानकारी च तृट्पित्तघ्नी तथा ' कये ' । तन्मज्जा मदरच्छर्दिवातपित्तज्वरापहा ॥ ९९ ॥ कषाया मधुरा वृष्या श्वासकासनिबर्हणी । यस्य यस्य फलस्येह वीर्यं भवति यादृश ॥ ३५०० ॥ तस्य तस्यैव वीर्येण मज्जानमपि निर्दिशेत् । अतिसारादिके शीतेऽभिन्यासे सूतिकामये ॥ १ ॥ शुद्धवाते च तद्वर्ज्यं सुज्ञवैद्यैर्विशेषतः । ५८ काष्ठधात्री । म० लघु आवळी । गु० नहाना आवळा । अन्यच्चाऽऽमलक प्रोक्त काष्ठधात्रीफल तथा ॥ २ ॥ क्षुद्रामलकमित्युक्त क्षुद्रजातीफल ' नृपे '। गुणाः । काष्ठधात्रीफल स्वादु कषाय कटुक तथा ॥ ३ ॥ शीत पित्तास्रदाहघ्न पूर्वोक्तमधिक गणैः । ९९ चिंचा । म० चिंच । गु० आमली । चिंचा तु चुक्रिका चुक्रा साऽम्लिका शाकचुक्रिका ॥ ४ ॥ अम्ली सुतिंत्तिडी चाम्ला चुक्रिका ' राजनामके ' । तिंत्तिडीका तथा सुक्ता सुक्तिका चिंचिका ' धने ' ॥ ५ ॥ दंतशठाऽऽम्लिकाऽऽम्ला च स्वाम्लीका यमदूतिका । गुरुपत्रा तु चारित्रा तिंतिणी तु सुचक्रिका ॥ ६ ॥ सुतिंतिडी तथा प्रोक्ता वैद्यविद्याविशारदैः । गणाः । चिंचाऽत्यम्ला भवदामा पक्का तु मधुराम्लिका ॥ ७ ॥ वातघ्नी पित्तदाहास्रकफदोषप्रकोपनी । पक्वचिंचाफलरसो मधुराम्लो रुचिप्रदः ॥८॥ शोफपाककरो लेपाद्व्रणदोषविनाशनः । चिंचापत्र च शोफघ्न रक्तदोषव्यथापह ॥ ९ ॥ तस्य शुष्कत्वचाक्षार शूलमदाग्निनाशन । प्रोक्ता ' राजनिघंटे ' तु वैद्यविद्याविशारदैः ॥ १० ॥ ' कैये ' त्वपक्का समोक्ता चोष्णा गुर्वी च वातजित् । कफपित्तप्रदा रक्तपित्तदा ' भावनामके ' ॥ ११ ॥ ' कैये ' शुष्कफल हृद्य कफतृट्क्लमहारक । श्रमघ्न

क्षुगिदाहघ्न 'द्रव्यरत्ने' प्रकीर्तित ॥ १२ ॥ श्रमभ्रान्तिहर प्रोक्त वैद्ये 'मदनपालक'। 'धन्व' पक्का तु वातघ्नी 'केये' तृष्णा गुरु सरा ॥ १३ ॥ बस्तिशोधनिका हृद्या रोचनी वह्निदीपनी। 'द्रव्ये' तु दोषजतृघ्नी 'भाव' रूक्षा प्रकीर्तिता ॥ १४ ॥ **अम्लसार**। म० चिनच सार, पन्हें। अम्लसारस्त शाकाम्ल चुक्राम्ल चाम्लचुक्रिका। चिरा-म्लमम्लचूडश्च चिरासारस्तु 'राजक'॥१५॥ गुणाः। अम्लसारस्त्वती-वाम्ला वातघ्न कफदाहकृत्। साम्यन शर्करामिश्रा दाहपित्तकफार्ति-नुत् ॥ १६ ॥ ६० **आम्रातक**। म० अंबाडा। गु० अंबेडा। आम्रा-तक पीतनक कपिचूतोऽम्लवाटक। शृगी कपी रसाढ्यश्च तनक्षीर कपिप्रिय ॥ १७ ॥ कपिचूडाऽम्रातकश्च 'नृपे' 'धन्व' तथा स्मृत। अम्रातो भावनश्चैव राजपुत्रो नृपात्मज ॥ १८ ॥ राजाम्रातक इ युक्त 'कैयदेवनिघण्टक'। आम्राट फली चैव प्रोक्तो 'मदनपालके' ॥ १९ ॥ पीतना मर्कटाम्रश्च 'भाव' प्रोक्त कपीतन। स्या-मधुरा-म्लको भूमीफल पशहरीतकी ॥ २० ॥ वर्षपाकी तथा प्रोक्तो वैद्य विद्याविशारदै। गणा। आम्रातक कषायाम्लमाम हृत्कण्ठहर्षण ॥ २१ ॥ पक्क तु मधुराम्लाख्य स्निग्ध पित्तकफापह। 'नृपे' 'धन्व' तथा वृष्य किञ्चिन्मारुतकृद्गुरु ॥ २२ ॥ आमवातहर रुच्य कफपि-त्तास्रनाशन। रसोष्ण तर्पण पक्क विष्टम्भि बृहण गुरु ॥२३ ॥ रक्तक्षयहर दाहक्षतघ्न 'कयदेवके'। ६१ **नारग**। म० नारिंग। गु० नारगी। नारगो नागरगश्च यागरग सुरगक ॥२४॥ऐरावतो मधपत्रो वक्त्रवास सुगधक। योगारगश्च गधाढ्यस्त्वमधश्च वरित्वक् ॥ २५ ॥ 'नृप' प्रोक्तस्तथा 'धन्वे' त्वक्सुगधस्तथा स्मृत। स्याचिरानतथ प्रोक्तो योगी वक्त्राधि-वासन ॥ २६ ॥ मुखप्रियो मधुराम्ल सप्रोक्तो योगनागक:। सुधा इन्द्रियरश्चैव मधराम्लरन 'पय' ॥ २७ ॥ जनप्रिय तु पीताग नारग 'द्रव्यरत्नत'। नार्यंगो नागरकश्च तथा नागरुक स्मृत ॥ २८ ॥ किर्मीरश्च तथा प्रोक्ता वैद्यविद्याविशारदै। गुणा। नारग मधुर चाम्ल

गुरूष्ण रोचन मत ॥ २९ ॥ वातामकृमिशूलघ्न श्रमहृद्बलद ' नृपे '। विषद दुर्जर हृद्य वातघ्न ' धन्वनामके '॥ ३० ॥ सर पित्तास्रहृच्चैव कफघ्न'कैयदेवके '। ६२ निंबूक। म० निंबू, लिंबू। गु० कागदी लींबु। निंबूकस्त्वम्लजंबीरा वह्निर्दीप्यश्च शोधन. ॥ ३१ ॥ वह्निबीजोऽम्लसारश्च दंताघातश्च रोचनः। निंबूको जन्तुमारी च प्रोक्तो ' राजनिघटे '॥ ३२ ॥ तथैव राजनिंबूकः प्रोक्तो वैद्यविशारदैः। **गुणाः।** निंबूक चाम्लरसक कटूष्ण गुल्मनाशन ॥ ३३ ॥ आमवातहर प्रोक्त चक्षुष्य वह्निवृद्धिकृत्। कासघ्न कफछर्दिघ्न कंठरुग्नाशन ' नृपे '॥ ३४॥ मलग्रहे बद्धगुदे हितकृत्सेवनेन तु । विषूचिघ्न वैद्यनाथैः प्रोक्त ' भावप्रकाशके '॥ ३५ ॥ वातघ्न ' कैयदेवे ' तु रुचिकृन्पित्तल तथा। विषघ्न चोदरहर क्षयघ्न शर्कराहर ॥ ३६ ॥ वातपित्तगरघ्न च तृष्णाशोषनिवारण। कटिग्रहत्रिदोषघ्न वामहृ द्रावनामके '॥ ३७ ॥ ६३ **जंबीर।** म० ईडनिंबू। गु० दोडिंगा लींबु। दंतशठश्च जंबीरजभजंभीरजंभला[1] । रोचनो मुखशोधी च जाड्यारिर्जन्तुजि- ' न्नृपे '॥ ३८ ॥ गंभीरो वक्त्रशोधी च ' धन्वके ' दंतहर्षणः । **गुणाः।** अपक्व चैव जंबीर रसेऽम्ल मधुर तथा ॥ ३९ ॥ वातघ्न पित्तकृत्प्रोक्त बल्य पाचनरोचन। वह्निवृद्धिकर पक्व मधुर चास्रपित्तहृत् ॥ ४० ॥ कफघ्न तर्पण रुच्य पुष्टिद वीर्यवर्धन। वर्ण्य ' राजनिघंटे ' तु तथा ' धन्वनिघटके '॥ ४१ ॥ वातश्लेष्मविबधघ्न तृष्णोत्क्लेशनिवारण। छर्दिश्वासहर प्रोक्त रेचकृत्कफवातहृत्॥ ४२॥ शूलामदोषजतुघ्न प्रोक्त ' कैयनिघटके'। हृत्पीडावारणप्रोक्त वैद्यैर्मदनपालके'॥ ४३॥ ६४ **मधुजंबीर।** म० साखरनिंबू। ततो मधुरजंबीरो मधुजमस्तदुत्तर। शखद्रावी तथा पित्तद्रावी शर्करक स्मृतः ॥४४॥ प्रोक्तो ' राजनिघंटे ' तु तथैव मधुजभलः। तथा च मधुजंबीरफलो ' धन्वनिघटके '॥ ४५॥

[1] ' राजनिंबू ' या नावाची एक निंबात वेगळी जात आहे असें मदनपालनिघटात सांगितलें आहे

मिष्टनिंबुस्तथा प्रोक्तो ' भावनामनिघण्टके ' । गुणा । मधुरो मधुजंबीरः शिशिरः कफपित्तजित् ॥ ४६ ॥ शोषघ्नस्तृषणो वृष्यः श्रमघ्नः पुष्टिदो ' नृप '। गरघ्न सर्वविषजित्कफोत्क्लेशतृषापह ॥ ४७ ॥ रक्तदोषाहचिच्छर्दिनाशनो ' भावनामके '। ६५ कपित्थ । म० कवठ । गु० कोंठ । कपित्थो दधि मालूरो मगल्यो नीलमल्लिका ॥ ४८ ॥ चिरपाकी तथा ग्राहिफलः करभवल्लभः । करडफलको दन्तशठा ग्रथिफलस्तथा ॥ ४९ ॥ स्यात्कठिनफल. प्रोक्तो ' राजनामनिघटक '। अक्षसरपो दधिफलस्तथा ग्राही कपिप्रियः ॥ ५० ॥ गधफलो दधित्थश्च ' धन्वतरिनिघटके ' । ' द्रव्ये ' कपित्थकः प्रोक्तः कषाय सुरभिच्छदः ॥५१॥ ' भावे ' पुष्पफलश्चैव ' काशे ' मन्मथ एव च । तथा कुचफलः प्रोक्तः कर्णाट्स्थ सुगधिक ॥ ५२ ॥ गुणाः । कपित्थो मधुराम्लश्च कषायस्तिक्तशीतल. ।वृष्यः पित्तानिल हन्ति सग्राही व्रणनाशन' ॥५३॥ कपित्थमाममम्लोष्ण कफघ्न ग्राहि वातल । दोषत्रयहर पक्व मधुराम्लरस गुरु ॥५४॥ अन्यच्च । कठरोगहर चाम हिक्काकृच्च जडत्वकृत् । दोषत्रयकर चैव सग्राहि विषहारक ॥ ५५ ॥ ' धन्वतरिनिघटे ' तु वातल कविभिः स्मृत । पक्व दोषत्रयहर गुरुश्वासवमिघ्नक ॥ ५६ ॥ हिक्काक्लमश्रमहर ग्राहि ' राजनिघटके '। रक्तक्षयकर प्रोक्त वैद्यै ' द्रव्यनिघटके ' ॥ ५७ ॥ ततो ' मदनपाले ' तु दुर्जर कठशोधन । तृषानिवारण प्रोक्त वैद्यै ' भावप्रकाशके ' ॥ ५८ ॥ ६६ तुंबरु । म० तिरफळ, चिरफळ । कों० तिसळी । गु० तुमर । तुबरुः सौरभः सौरो वनजः सानुजोऽद्रिजः । तीक्ष्णवल्कस्तीक्ष्णफलस्तीक्ष्णपत्रो महामुनिः ॥ ५९ ॥ स्फुटफलः सुगधश्च प्रोक्तो ' राजनिघटके '। तथाऽधकश्च सप्रोक्तो भिषग्विद्याविशारदैः ॥ ६० ॥कात्यायनफलैः पर्वैः केसराग्रैः समुद्रजै । वृक्षस्तुबरको ज्ञेयो ' मदने ' तु प्रकीर्तितः ॥ ६१ ॥ वृक्षस्तुबरको नाम पश्चिमार्णवतीरज.। चीनीतम्मविक्षोभमारुतोद्धूतपल्लवः ॥ ६२ ॥ अष्टागहृदये चैव वाग्भट्टन प्रकीर्तितः । गुणाः । तुब-

नैव रक्तपित्तनिवारण । तृषामोहविनाश च वातवृद्धि प्रकीर्तित ॥९८॥७१
कर्कट । म० कान्ढ । कों० काकड, कुष्ठक । गु० करपटा, काकड ।
कर्कटः फार्कटः कर्कः क्षुद्रधात्री च स स्मृतः । क्षुद्रामलकगन्धश्च प्रोक्तः
कर्कफलो 'नृपे' ॥ ९९ ॥ नागरुक कर्कटक कर्कट मृगलेंडिक । तोदन
कदन नैव मृगविट्सदृश 'मदे' ॥ ३६०० ॥ गुणाः । कार्कट तु फल
रुच्य कषाय दीपन पर । कफपित्तहर ग्राहि चक्षुष्य लघु शीतल ॥१॥
७२ श्लेष्मातक । म० भाकर, शेलवट । गु० गुंदो मोटो । श्लेष्मातको
बहुवारः पिच्छलो द्विजकुत्सित. । शेलुः शीतफल' शीतः शाकः
पर्वदारकः ॥ २ ॥ भूतद्रुमो गन्धपुष्पो 'राजनामनिघंटके'। तथा 'धन्व-
निघंटे' तु भाषितो लेखमाटक ॥ ३ ॥ शेल. शेलुर्भूतवृक्ष शीतलो
द्विजकालित. । स्थूलश्लेष्मातकोद्दालो लेखाशालट एव च ॥ ४ ॥
श्लेष्मातश्च तथा 'द्रव्ये' 'मदने' भूतवाव्रः । शेलुः शेलूश्च शेलूफः
शेलकः पि क तितः ॥ ५ ॥ तथा 'भावप्रकाशे' तु बहुवारक एव च ।
उद्दालक शीतफल. कर्नदारस्तथा स्मृतः ॥ ६ ॥ गुणाः । श्लेष्मातकः
कटुहिमः कषायो मधुरस्तथा । पाचकः कृमिशूलघ्नश्चामरक्तमणा-
पहः ॥ ७ ॥ मलरोधरक्तादहर. कफकृ 'द्राजनामके'। वाताध्मानब-
लासादिकारको 'द्रव्यनामके' ॥ ८ ॥ विषस्फोटविसर्पादिकुष्ठघ्नश्च
कषापक. । उष्ण' म.को भिषक्श्रेष्ठ 'द्रव्यरत्नाकरे' ध्रुव ॥ ९ ॥
तत्फल तु भवद्रूच्य वातपित्तक्षयघ्नक । ७३ लघुश्लेष्मातक । म०
गोंधणी । गु० गुंदी नहानी । भूकर्बदारकश्चान्यो लघु श्लेष्मातक-
स्तथा ॥ १० ॥ भूशेलुर्लघुशलुश्च पिच्छला लघुपूर्वकः । लघुशीतः
सूक्ष्मफला लघुभूतद्रुमो 'नृपे' ॥ ११ ॥ शलाटुर्बदाकारो 'द्रव्ये'
तु श्लेष्मलीफलः । मुक्ताफलो बिदुफलो पकरक्तफलोऽपि च ॥ १२ ॥
गुणा' । भूकर्बुदारा मधुरः कृमिघ्नो वातकोपन । स्वर्णस्य मारक' शीतो
'राजनामनिघण्टक' ॥ १३ ॥ तत्फल तु यदा पक्व विदाहि श्लेष्मल
गुरु । रूक्ष न बृह । मात्र वातपित्तादिनाशहृत् ॥ १४ ॥ केश्य तिक्तो-

ष्णमधुरं तुवरं विषनाशनं । कटु विस्फोटव्रणजित्कफपित्तास्रना-
शन ॥ १५ ॥ विसर्पघ्नं तथा 'केये' 'द्रव्ये' केशहरं तथा।
७४ मुष्कक ॥ म० मोखा, मोखाडा । गु० । मरखो । मुष्कको
मोचको मुष्को मोक्षको मुजकस्तथा ॥ १६ ॥ गोलीढो
मेहनश्चैव क्षारवृक्षश्च पाटलिः । विषापहो जटालश्च वनवासी
सुतीक्ष्णकः ॥ १७ ॥ श्वेतः कृष्णश्च स द्वेधा 'राजनामनिघंटके'।
मुष्टिस्तु गोलकश्चैव क्षारश्रेष्ठस्तु 'धन्वके' ॥ १८ ॥ घटा 'मदन-
पाले' तु शिखरी क्षुद्रपाटली । मोक्षस्तु गोलिहश्चैव 'भावनामनि-
घंटके' ॥ १९ ॥ 'केये' तु झाटलो घटापाटलिः क्षारपादपः ।
घंटाक्स्तीक्ष्णकः क्षारी प्रोक्तो वैद्यविशारदैः॥ २० ॥ गुणाः। मुष्ककः
कटुकोम्लश्च रोचनः पाचनो 'नृपे'। प्लीहगुल्मोदरार्तिघ्नो द्विधा
तुल्यगुणान्वितः ॥ २१ ॥ वातश्लेष्महरो ग्राही 'धन्वतरीनिघंटके'।
निर्यासोऽस्य पर वृष्यः शोपपित्तानिलापहः॥ २२ ॥ 'मदे' प्रोक्त
'गणे' चैव क्षीरशाश्वनशुक्रहृत् । चक्षुरोगहरश्चैव वातहृद् 'द्रव्यर-
त्नके' ॥ २३ ॥ विषक्रमिहरो चैव बस्तिरोगहरः कटुः। तत्पुष्प कफ-
पित्तघ्न प्रोक्त 'मदनपालके' ॥ २४ ॥ ७५ करमर्द । म० करवंद।
गु० करमदी, करमदा । करमर्दः सुषेणश्च कराम्लः करमर्दकः।
आविघ्नः पाणिमर्दश्च कृष्णपाकफलो 'नृपे' ॥२५॥ क्षीरफेना साम्ल-
पुष्पा 'केये' तु करमर्दिका । पाककृष्ण त्वविघ्न च स्वविघ्न ।डिडिमं
मत ॥ २६ ॥ कृष्णपाक क्षीरफल तथा कृष्णफल स्मृतं । गुणाः ।
करमर्दः स तिक्ताम्लो बालो दीपनदाहकः ॥ २७ ॥ पक्वस्त्रिदोषश-
मनोऽरुचिघ्ना विषघ्ना 'नृपे'। तृष्णापित्तहर प्रोक्त 'धन्वतरीनिघ-
टके' ॥ २८ ॥ रुच्य गुरूष्ण संप्रोक्त 'कयदेवनिघंटके'। कफप्रद
तु 'मदन' रक्तपित्तप्रद तथा ॥ २९ ॥ रक्तपित्तहर पक्व मधुर 'धन्व-
नामके'। 'कये' तृड्वातहर सरः कफनिवारण ॥ ३० ॥ ततो
'मदनपाले' तु पित्तवायुहर स्मृत । ७६ तेजःफल।म० तेजफल ।गु०

तेजफल । तेजःफलो बहुफलस्तथोक्तः शाल्मलीफलः ॥ ३१ ॥ फलतीक्ष्णादिसंयुक्तः फलान्तस्तबकादिकः । स्तंबीफलो गंधफलः कंटवृक्षस्तु 'राजके' ॥ ३२ ॥ गुणाः । तेजःफलः कटुस्तीक्ष्णः सुगंधिर्दीपनः परः । वातश्लेष्मारुचिघ्नश्च बालरक्षाकरः परः ॥ ३३ ॥ ७७ विकंटक । म० हाशी । गु० हाशा । विकंटको मृदुफलो ग्रंथिकः स्वादुकंटकः । योरठकः काकयानो व्याघ्रपादो घनद्रुमः ॥ ३४ ॥ गर्जाफलो घनफलो मेघस्तनितसंभवः । स्यान्मुदिरफलश्चैव प्रावृष्यस्तदनंतर॥ ३५॥ तथा ह्रास्यफलश्चैव स्यात्स्तनितफलो 'नृपे'। गुणाः। विकंटकः कषायः स्यात्कटुरूक्षो रुचिप्रदः ॥ ३६ ॥ दीपनः कफहारी च वस्त्ररंगविधायकः । ७८ हरीतकी । म० हिरडा । गु० हरडे । हरीतकी हैमवती शिवा पथ्याऽव्यथाऽभया॥ ३७ ॥चेतना रोहिणी चैव प्रपथ्या पूतनाऽमृता । जीवप्रिया जीवनिका जीवन्ती च भिषग्वरा ॥ ३८ ॥ प्राणदा तु जया जीव्या कायस्था श्रेयसी तथा । देवी दिव्या च विजया प्रोक्ता 'राजनिघण्टके' ॥ ३९ ॥ चेतकी नंदिनी 'धन्वे' 'केये' चेतनिका तथा । जीवनीया वयस्था च प्रमथा तदनंतर ॥ ४० ॥ रसायनफला मेध्या शक्रसृष्टा तु पाचनी । गुणाः । हरीतकी पंचरसा रेचनी कोष्ठरोगहृत् ॥ ४१ ॥ स्वरोगाक्षिरोगघ्नी संप्रोक्ता योगवाहिनी । रसायनी 'नृपे' प्रोक्ता 'द्रव्ये' हृद्रोगकासजित् ॥ ४२ ॥ गलग्रहात्रिदोषघ्नी हनुस्तंभहरा तथा । शोफोदरहरा छर्दिकुष्ठह 'मदने' स्मृता ॥ ४३॥ मूत्रकृच्छ्राश्मरीघ्नी च मूत्राघातहरा 'भवे'। स्वादुपाका सरोष्णा च रूक्षा लघ्वी च बृंहणी ॥ ४४ ॥ दीपनी पाचनी मेध्या बलबुद्धिकरा तथा । स्मृतिप्रदा गुल्महन्त्री वैवर्ण्यस्य विनाशनी ॥ ४५ ॥ ततः पुराणविषमज्वररुक्पाडुरोगहृत् । कामलामेहमोहघ्नी शिरारुग्ग्रहणीहरा॥४६॥ शोफशोफातिसारघ्नी श्वासकासकृमिघ्निका । प्लीहाऽऽनाहगरघ्नी च विबंधोदरनाशिनी ॥ ४७ ॥ ऊरुस्तभारुचिघ्नी च हिध्माऽऽध्मानव्रणाञ्जयेत् । शल्यत्रिदोषहंत्री च प्रोक्ता 'कैयनिघंटके' ॥ ४८ ॥ हरी-

तकीभेदाः। हरीतक्यमृतोत्पन्ना सप्तभेदैरुदीरिता। तस्या नामानि वर्णाश्च वक्ष्याम्यथ यथाक्रमम् ॥ ४९ ॥ विजया रोहिणी चैव पूतना चामृताऽभया। जीवन्ती चेतनी चेति नाम्ना सप्तविधा मता ॥ ५० ॥ अलाबुनाभिर्विजया सुवृत्ता रोहिणी मता। स्वल्पत्वक्पूतना ज्ञेया स्थूलमांसाऽमृता स्मृता ॥ ५१ ॥ पंचास्रा चाभया ज्ञेया जीवन्ती स्वर्णवर्णभाक्। त्र्यस्रा तु चेतकी विद्यादित्यासां रूपलक्षणम् ॥५२॥ विंध्याद्रौ विजया हिमाचलभवा स्याच्चेतकी पूतना सिंधौ स्यादथ रोहिणी तु विजया जाता प्रतिस्थानके। चंपायाममृताऽभया च जनिता देशे सुराष्ट्राह्वये जीवन्ती च हरीतकी निगदिता सप्तभेदा बुधैः ॥ ५३ ॥ सर्वप्रयोगे विजया च रोहिणी क्षतेषु लेपेषु तु पूतनोदिता। विरेचने स्यादमृता गुणाधिका जीवन्तिका स्यादि हृज्जीर्णरोगजित् ॥ ५४ ॥ स्याच्चेतकी सर्वरुजापहारिका नेत्रामयघ्नीमभयां वदन्ति। इत्थं यथायोगमिमं प्रयोजिता ज्ञेया गुणाढ्या न कदाचिदन्यथा ॥ ५५ ॥ चेतकी च धृता हस्ते यावत्तिष्ठति देहिनः। तावद्विरेचते वेगात्तत्प्रभावान्न संशयः ॥५६॥ सप्तानामपि जातीनां प्रधानं विजया स्मृता। सुखप्रयोगसुलभा सर्वव्याधिषु शस्यते ॥ ५७ ॥ क्षिप्ताऽम्भु निमज्जति या सा ज्ञेया गुणवती भिषग्वर्यैः। यस्या यस्या भूयो निमज्जनं सा गुणाढ्या स्यात् ॥ ५८ ॥ हरते प्रसभं व्याधीन्भूयस्तरति यद्वपुः। हरीतकी तु सा प्रोक्ता सप्त कीर्तिशिवाचकः ॥ ५९ ॥ हरीतकी तु तृष्णायां हनुस्तंभे गलग्रहे। शोषे नवज्वरे जीर्णे गुर्विण्यां नैव शस्यते ॥ ६० ॥ इति राजनिघंटात् ॥

७९ विभीतक। म० बेहडा, बेहळा, हेळा। गु० बेडां बेहेडा। विभीतकस्तैलफलो भूतवासः कलिद्रुमः। संवर्तकस्तु वासंतः कलिवृक्षो बहेडकः ॥६१॥ हार्यः कर्षफलः कल्को धर्मघ्नोऽक्षोऽनिलघ्नकः। विभीतकश्च कासघ्नो 'राजनामनिघंटके' ॥ ६२ ॥ धर्मद्वेषी स्वक्षकश्च तुमुलो विंध्यजातकः। निलपुष्पो रोमहर्षो तुमलश्च वनाश्रयः ॥ ६३ ॥ मोक्षः 'केयनिघटे' तु 'भावे' कलियुगालयः। भूतावासस्तुषः 'कोशे' तथा

विभीतकी स्मृता ॥६४॥ कलिः कलिंदः सवर्तो विधीतश्च तथा स्मृत । गुणाः । विभीतकः कटुस्तिक्तः कषायोष्णः कफापहः ॥६५॥ चक्षुष्यः पलितघ्नश्च विपाके मधुरा लघुः । 'नृपे' शोकस्तथा 'द्रव्ये' हिमो हृद्रोगहा स्मृतः ॥ ६६ ॥ कफपित्तहरश्चोष्णवीर्यो भेदी ' मदे ' स्मृतिः । कृमिहा च सरो रूक्षः प्रोक्तो ' धन्वनिघण्टु ' ॥ ६७ ॥ वैवर्ण्यघ्नस्तथा केश्या रोचनः ' कैयदेवके '। तन्मज्जा मदकृत्प्रोक्ता कफमारुतहा ' कय' ॥६८॥ तृट्छर्दिकफवातघ्नी प्रोक्ता ' भावप्रकाशके '।' गणे हिक्काहरा प्रोक्ता पुरातनचिकित्सकैः ॥ ६९ ॥ ८० पूग । म० सुपारी, पोफळ । गु० सोपारी । पूगस्तु पूगवृक्षश्च क्रमुको दीर्घपादपः । वल्कतरुर्दृढवल्कश्चिक्कणश्च तथा ' नृपे ' ॥ ७० ॥ ' धन्वंतरिनिघंटे ' तु गुवाकः खपूर स्तथा । घोंटा तु गुरुपुष्पश्च क्रमुः पूगी कषीतनः ॥ ७१ ॥ गूवाक क्रमुकी ससी ततुसारः सुरंजनः । गोपदलस्त्वकोटश्च करमट्टस्तृणद्रुमः ॥ ७२ ॥ क्रमुकस्तृणवृक्षश्च गुहाशया तथा स्मृता। फल तु प्राक क्रमुक चोद्वेग केनुक तथा ॥ ७३ ॥ स्यात्कषायफल पूग तथा चामरपुष्पक । पूगीफल पूगफल स्यात्क्रमुकफल तथा ॥ ७४ ॥ घोंटाफल श्लक्ष्णक च प्रोक्त वैद्यविशारदैः । चिक्कणपूगफलनामानि । म० चिक्कणसुपारीचीं नावें । पूग तु चिकणी चिका चिक्कण श्लक्ष्णक तथा॥७५॥ उद्वेग क्रमुकफल तथा पूगफल नृपे ' । गुणाः । पूगवृक्षस्य निर्यासो हिमः समोहनो गुरुः ॥ ७६ ॥ विपाके सोष्णक्षारः साम्लो वातप्रपित्तलः । खेरी च मधुरा रुच्या कषायाम्ला कटुस्तथा ॥ ७७ ॥ पथ्या च कफवातघ्नी मारिका मुखदोषनुत् । नैल्वतं मधुर रुच्य कठशुद्धिकर लघु ॥ ७८ ॥ त्रिदापशमन दीप्य रसाल पाचन सम । गौल्य गुहागरं श्लक्ष्ण कषाय कटु पाचन ॥ ७९ ॥ विष्टंभजठराध्मानहरण द्रावक लघु । घोंटी सुपारी । घोंटा कटुकषायोष्णा कठिना रुचिकारिणी ॥ ८० ॥ मलविष्टंभशमनी पित्तहृद्दीपनी तथा । चौलसुपारी । पूगीफल चेटलमज्ञक यच्चकोंकणेषु प्रथित सुगंधि ॥ ८१ ॥ श्लेष्मा-

पहं दीपनपाचन च बलप्रदं पुष्टिकर रसाढ्य । चल्लगुल्लसुपारी । यत्का-
कणे चल्लगुलाभिधानकं ग्रामोद्भव पूगफलं त्रिदोषनुत् ॥ ८२ ॥ आमा-
पह रोचनरुच्यपाचन विष्टमतुदामयहारि दीपन । चदापुरी सुपारी ।
चंद्रापुरोद्भव पूग कफघ्न मलशोधन ॥ ८३ ॥ कटु स्वादु कषाय च
रुच्यं दीपनपाचन । तैलगणातील सुपारी । आंध्रदेशोद्भवं पूग कषायं
मधुर रसे ॥ ८४ ॥ वातजिद्वक्त्रजाडयघ्नमीषदम्ल कफापह । पूगीफलवि-
शेषगुणाः । पूग समोहकृत्सर्व कषायं स्वादु रेचन ॥ ८५ ॥ त्रिदो-
षशमन रुच्य वक्त्रक्लेदमलापह । आमं पूगं कषाय मुखमलशमन कण्ठशुद्धि
विधत्ते । रक्तामश्लेष्मपित्तप्रशमनमुदराध्मानहारं सर च । शुष्क कठाम-
यघ्न रुचिकरमुदित पाचन रेचन स्यात्सपर्णेनायुत नेत्र्याटिति वितनुते
पाडुवात च शोफ ॥ ८६ ॥ ' नृपे ' प्रोक्त तथा ' धन्वं ' कफघ्न भवि
पित्तजित् ॥ ८७ ॥ मधुर गुरु हृद्य च प्रोक्त ' कैयनिघटके ' । पक्कं
फलं तु सप्राक्त वातल स्निग्धमेव हि ॥ ८८ ॥ रक्तपित्तविवृद्धं च कफ-
वातहर तथा । मुखदौर्गध्यहृत्कफमदक्लेदहर ' कये ' ॥ ८९ ॥ विशद
क्रामकृत्प्रोक्त श्लेष्मश्रमहर ' मदे '। ८१ नागवल्ली । म० नागवेल, पान-
वेल । गु० नागरवेल्य । नागवल्ली तु ताबूली तथा फणिलता मता ॥ ९० ॥
फणिवल्ली पर्णलता तथा सप्तशिरा स्मृता । स्याद्भुजगलता प्रोक्ता भक्ष्य-
पत्री तथा च सा ॥ ९१ ॥ सा श्रीवाटाम्लादिवाटादिनानाग्रामस्तोम-
स्थानभेदाद्विभिन्ना । एकाऽप्येषा देशमृत्स्नाविशेषान्नानाकार याति कार्ये
गुणैश्च ॥ ९२ ॥ प्रोक्ता०' राजनिघटे ' तु तथा ' धन्वनिघटके ' ।
बहुला च बला नेता भद्रा पातालवासिनी ॥ ९३ ॥ मुखरागकरी रम्या
चामृता त्वमृतोद्भवा । कामदा कामजननी जीवन्ती यावनी प्रिया ।
॥ ९४ ॥ आमादजननी हृद्या देवतामयभजनी,। ताबूलवल्ली नागाह्वा
रंजनी तीक्ष्णमजरी ॥ ९५ ॥ देवप्रिया तथा प्रोक्ता कथिता दानवप्रिया।
तथा ' मदनपाले ' तु नागिनी नागवल्लरी ॥ ९६ ॥ ताबूलपर्णिका चैव
सप्रोक्ता नागवल्लिका । तावूलवल्लिका नागपर्णी तु श्रमभजनी ॥ ९७ ॥

नागवल्लीदलं प्रोक्तं तांबूलं मुखभूषणं । पर्णं पत्रं तु संप्रोक्तं वैद्यविद्याविशारदैः ॥ ९८ ॥ गुणाः । नागवल्ली कटुस्तीक्ष्णा तिक्ता पीनसवातजित् । कफकासहरा रुच्या दाहकृद्दीपनी परा ॥ ९९ ॥ शिरिवाडीपान । श्रीवाटी मधुरा तीक्ष्णा वातपित्तकफापहा । रसाढ्या सरसा रुच्या विपाके शिशिरा स्मृता ॥ ३७०० ॥ अंबाडेपान । स्यादम्लवाटी कटुकाम्लतिक्ता तीक्ष्णा तथोष्णा मुखपाककर्त्री । विदाहपित्तास्रविकोपनी च विष्टंभदा वातनिबर्हणी च ॥ १ ॥ सातसी पान । सतसा मधुरा तीक्ष्णा कटुरुष्णा च पाचनी । गुल्मोदराध्मानहरा रुचिकृद्दीपनी परा ॥२॥ गुहागर,–अहगर–पान । गुहागरे समशिरा प्रसिद्धा तत्पर्णजूर्णातिरसाऽतिरुच्या । सुगंधितीक्ष्णा मधुराऽतिहृद्या संदीपनी पुंस्त्वकराऽतिबल्या॥ ३ ॥ विरेचनी वक्त्रसुगंधकारिणी । अमरापान, माळव्यांत प्रसिद्ध । नाम्नान्याम्लसरा सुतीक्ष्णमधुरा रुच्या हिमा दाहतृत्पित्तोद्रेकहरा सुदीपनकरी बल्या मुखामोदिनी । स्त्रीसौभाग्यविवर्द्धनी मदकरी राज्ञां मदा वल्लभा गुल्माध्मानविबंधजिच्च कथिता सा मालवे तु स्थिता ॥ ४ ॥ पोटफुलीपान, तेलंगणांत प्रसिद्ध । आंध्र पटुलिका नाम कषायोष्णा कटुस्तथा । मलापकर्षी कंठस्य पित्तकृद्वातनाशनी ॥ ५ ॥ घोरसमुद्रदेशपान । ह्वेसणीया कटुरतीक्ष्णा हृद्या दीर्घदला च सा । कफवातहरा रुच्या कटुर्दीपनपाचनी ॥ ६ ॥ सद्यस्त्रोटितमक्षितं मुखरुजाजाड्यावहं दोषकृद्दाहारोचकरक्तदापि मलकृद्विष्टंभि वान्तिप्रदं । यद्भूयो जलपानपोषितरसं तच्चाचिरात्त्रोटितं तांबूलीदलमुत्तमं च रुचिकृद्वर्ण्यं त्रिदोषार्तिनुत् ॥ ७ ॥ कृष्णं पर्णं तिक्तमुष्णं कषायं धत्ते दाहं वक्त्रजाड्यं मलं च । शुभ्रं पर्णं श्लेष्मवातामयघ्नं पथ्यं रुच्यं दीपनं पाचनं च ॥ ८ ॥ शिरापर्णं तु शैथिल्यं कुर्याच्चस्याप्यहद्भ्रमः । शीर्णं त्वग्दोषद तस्य भक्षिते च शितं सदा ॥ ९ ॥ अनिधाय मुखे पर्णं पूगं खादति यो नरः । मतिभ्रंशो दरिद्री स्यादन्ते स्मरति नो हरिम् ॥ १० ॥ ८२ चूर्ण । म० चुना । गु० चुनो । चूर्णं सुधा शिलाक्षारं मौधभूषणकं तथा । सुधा-

द्वयं तु संप्रोक्तं ' द्रव्यनामनिघंटके ' ॥ ११ ॥ गुणाः। चूर्णं चार्जुन-वृक्षजं कफहरं गुल्मघ्नमर्काह्वयं शोफघ्नं कुटजं करंजजनितं वातापहं रुच्यदं । पित्तघ्नं जलजं बलाभिरुचिदं शैलाह्वयं पित्तदं, स्फाटिकं दृढ-दन्तपंक्तिजननं शुक्त्यं हितं रूक्षदं ॥ १२ ॥ तांबूललक्षणं। पर्णाधिक्ये दीपनी रंगदात्री पूगाधिक्ये रूक्षदा कृच्छ्रदात्री । साराधिक्ये खादिरे शोषदात्री चूर्णाधिक्ये पित्तकृत्पूतिगंधा ॥ १३ ॥ इतिराजनिघण्टात् ॥

इति आम्रादिवर्गः समाप्तः ।

## १० चंदनादिवर्गः

१ चंदन । म० चंदन। गु० सुखड, चंदन। श्रीखंड चंदनं प्रोक्तं महार्हं श्वेतचंदनं । गोशीर्षं तिलपर्णं च मंगल्यं मलयोद्भवं ॥ १४ ॥ गंधराजं सुगंधं च सर्पावासं च शीतलं । गंधाढ्यं गंधसारं च भद्रश्री-र्भोगिवल्लभं ॥ १५ ॥ पावनं स्यान्मलयजं शीतगंधं च ' राजके ' ॥ शिशिरं श्रीस्तथा भद्रं हिमं श्वेतं तु ' द्रव्यके ' ॥ १६ ॥ चंद्रद्युति-स्तथा तैलपर्णको ' भावनामके ' । चंद्रकांतं च पाटीरं गंधं स्यात्तिलपर्णिकः ॥ १७ ॥ एकांगं तु पटीरं च शीतं भद्राश्रयं स्मृतं । सर्वप्रियं राजयोग्यं प्रोक्तं वैद्यविचक्षणैः ॥ १८ ॥ गुणाः ॥ चंदनं कटु तिक्तं च शीतलं चातिपित्तजित् । वमिज्वरकृमिघ्नं च तृषासंतापनाशनं ॥ १९ ॥ वक्त्ररुजापहं वृष्यं कांतिसौरभ्यदं तथा ॥ श्रेष्ठं कोटरकर्परोपकलितं सुग्रंथि सद्वीरवं छेदे रक्तमयं तथा च विमलं पीतं च यद्घर्षणे । स्वादुस्तिक्तकटुः सुगंधबहलं शीतं यदल्पं गुणे क्षीणं चार्धगुणान्वितं तु कथितं तच्चंदनं मध्यमं ॥ २० ॥ चंदनं द्विविधं प्रोक्तं बेट्टसुकडिसंज्ञकं ॥ २१ ॥ बेट्टं तु सार्द्रविच्छेदं स्वयं शुष्कं तु सुकडि । मलयाद्रिसमीपस्थाः पर्वता बेट्टसंज्ञकाः ॥ २२ ॥ तस्मात् चदनं यत्तु बेट्टवाच्यं क्वचिन्मते । अतीव शीतलं बेट्टं दाहपित्तज्वरापहं ॥ २३ ॥ छर्दिमोहतृषाकुष्ठतिमिरं रक्तकामजित् । सुकडिचंदनं तिक्तं कृच्छ्रपित्तास्रदाहनुत् ॥ २४ ॥ शैत्यसुगंधदं चार्द्रं शुष्कं लेपे तद्-

न्यथः । ' नृपे ' प्रोक्तं तथा ' धन्वे ' त्वतर्दाहापहारकं ॥ २५ ॥ विषघ्नं रक्तपित्तघ्नं नेत्ररोगव्रणापहं । ' केये ' गुरुक्रमहरं दाहपित्तकफापहं ॥ २६ ॥ हृद्यमाह्लादकृत्प्रोक्तं ' मदने ' वैद्यनायकैः । २ **शबरचंदन** । म० किंचित्पीत चंदन, कोंकणांत प्रसिद्ध । गु० शबरचंदन । नातिपीतं तु कैरातं तथा शबरचंदनं ॥ २७ ॥ वन्यं च गंधकाष्ठं च शैलगंधं तथा स्मृतं । किरातकाष्ठकं चैव प्रोक्तं ' राजनिघंटके ' ॥ २८ ॥ **गुणाः** । कैरातं शीतलं तिक्तं श्लेष्मानिलश्रमघ्नकं । पित्तघ्नं स्फोटपामाघ्नं तृट्तापविमोहहृत् ॥ २९ ॥ ३ **पीतचंदन** । म० मलयागर पीतचंदन, होसपा देशांत प्रसिद्ध । गु० पीळो चंदन । पीतगंधं तु कालीय पीतकं माधवप्रियं । कालीयकं पीतकाष्ठं बर्बरं पीतचंदन ॥ ३० ॥ प्रोक्तं ' राजनिघंटे ' तु तथा कालानुसारकं । कालानुसार्यकं पीतं तथा नारायणप्रियं ॥ ३१ ॥ पीतसारं तु कालेयं मलयोत्थं तु जायक । तथा मलयजं कालसारं चैव हरिप्रियं ॥ ३२ ॥ कालेयकं वर्णदं च पीताभं कांतिदायकं । **गुणाः** । पीतं च शीतलं तिक्तं कुष्ठश्लेष्मानिलापहं ॥ ३३ ॥ कंडूविचर्चिकादद्रुकृमिहृत्कांतिदं परं । ४ **पत्रांग** । म० पतंग । गु० पतंग । पतंगं चैव पत्रांगं रक्तकाष्ठ सुरंगदं ॥ ३४ ॥ पत्राढ्यं पट्टरागं च मार्यावृक्षश्च रक्तकः । लोहितं रंगकाष्ठ च रागकाष्ठं कुचंदनं ॥ ३५ ॥ पट्टरंजनकं चैव सुरंगं ' राजनामके ' । सुरंगकं तथा ' धन्वे ' पट्टरंजनमेव च ॥ ३६ ॥ पतंगं चैव पत्तूरं पत्रकाष्ठ नवन्यकं । पत्तूरगन्नं ' केये ' तु तथा ' भावप्रकाशके ' ॥ ३७ ॥ रक्तसारं रंजनं च पट्टरंजकमेव च । **गुणाः** । पत्रांगं कटुकं रूक्षमम्ल शीतं तु मौल्यकं ॥ ३८ ॥ वातपित्तज्वरघ्न च. विस्फोटोन्मादभूतहृत् । ' नृपे ' प्रोक्तं तथा ' धन्वे ' व्रणरोपणकं स्मृतं ॥ ३९ ॥ ' केये ' तु पित्तकफहृद् ' द्रव्ये ' मूत्राश्मरीघ्नकं । ५ **रक्तचंदन** । म० रक्तचंदन । गु० रतांजळी । रक्तचंदनमन्यं तु लोहितं हरिचंदनं ॥ ४० ॥ रक्तसारं ताम्रसारं

रुश्च भूतहारि तदुत्तर ॥ ५८ ॥ भवदारुस्तथा प्रोक्तं ' राजनामनिर्घंटके । ' दारुः सुगाह्व किलिमं सुदारुस्त्विन्द्रदारु च ॥ ५९ ॥ इन्द्रद्रुस्त्विन्द्रवृक्षश्च तथा त्वमरदारु च । स्नेहवृक्षं महादारु प्रोक्तं ' धन्वनिघंटके ' ॥ ६० ॥ ' कये ' सुरद्रुमश्चैव शक्रद्रुश्च तथा स्मृतं । स्नेहवृक्षः शक्रदारुः प्रोक्तो ' मदनपालके ' ॥ ६१ ॥ मस्तदारु द्रुकिलिमं ' भावे ' तु सुरभूरुहः । शक्रद्रुमः पारिभद्रः शक्रपादप एव च ॥ ६२॥ **गुणाः** । देवदारु द्विधा ज्ञेयं तत्राद्यं स्निग्धदारुकं । द्वितीयं काष्ठदारु स्याद्द्वयोर्नामान्यभेदतः ॥ ६३ ॥ स्निग्धदारु स्मृतं तिक्तं दीर्घोष्णं श्लेष्मवातजित् । आमदोषविबंधार्शःप्रमेहज्वरनाशनं ॥ ६४ ॥ उष्णं च श्लेष्मवातघ्नं प्रोक्तं ' धन्वनिघंटके ' । ' कये ' हिक्काज्वरघ्नं च कडुपीनसनाशनं ॥ ६५ ॥ ' भावे ' तंद्रारक्तकृच्च श्लेष्माश्वासानिलापहं । **९ काष्ठदारु** । म०, गु० काष्ठदेवदार । देवकाष्ठं पूतिकाष्ठं भद्रकाष्ठं सुकाष्ठकं ॥ ६६ ॥ अस्निग्धदारुकं चैव काष्ठदारुस्तु ' राजके ' । **गुणाः** । देवकाष्ठं तु तिक्तोष्णं रूक्षं श्लेष्मानिलापहं ॥ ६७ ॥ भूतदोषापहं धत्ते लिमगंधं कालिकं । ' नृप ' प्रोक्तं तथा ' धन्वे ' तूष्णं स्निग्धं च वातहृत् ॥ ६८ ॥ आमदोषविबंधघ्नं प्रमेहश्लेष्मरोगजित् । **१० चीडा** । म०, गु० चिडादेवदार, पंजाबात प्रसिद्ध । चीडा तु दारुगंधा च तारा गंधवधूस्तथा ॥ ६९ ॥ मंगल्या भूतमारी च तरुणी गंधमादनी । कपाटिनी महजिच्च प्रोक्तं ' राजनिघंटके ' ॥ ७० ॥ सुमंगल्यं च कपटं वातभूतनिवारिणी । तरुणं तु तथा ' धन्वे ' संप्रोक्तं ग्रहभीतिजित् ॥ ७१ ॥ **गुणाः** । चीडा कटूष्णा कासघ्नी कफजिद्दीपनी परा । अत्यंतं भविता सा तु पित्तदाहश्रमापहा ॥ ७२ ॥ ' धन्वे ' तु रक्तपित्तघ्नी कफवातहरा स्मृता । **११ सप्तपर्ण** । म० सातवीण । गु० सातवीन । सप्तपर्णश्छत्रपर्णः शुक्तिपर्णः सुपर्णकः ॥७३॥ गंध छदो गुच्छपुष्पो युग्मपर्णो मुनिच्छदः । बृहत्त्वग्बहुपर्णश्च तथा शाल्मलिपत्रकः ॥ ७४ ॥ मदगंधः विषमच्छदः प्रोक्तो ' राजनिघंटके ' ।

समाह्व स्थूलपत्रश्च छत्री बहुच्छदः ' कये ' ॥ ७५ ॥ सप्तपत्रो विशालत्वक् बहुत्वक् विषमच्छद । बृहद्वल्कः पृथक्पर्णः पृथक्पत्रः शिरोरुजा ॥७६॥ ग्रहनाशो दलेगंधा ग्रहाशी च गुहाशयः । सुदीर्घः स्थूलपर्णी च अयुग्मच्छद एव च ॥ ७७॥ स्याद्बृहद्वल्कलो युग्मपत्रः स्याच्छारदस्तथा । गुणाः ।सप्तपर्णस्तु तिक्तोष्णास्त्रिदोषघ्नश्च दीपनः ॥७८॥ मदगंधो निरुध्ऽय व्रणरक्तामयकृमीन् । प्रोक्ता ' राजनिघंटे ' तु ज्वरघ्नस्तु ' मणे ' स्मृतः ॥ ७९ ॥ शुलगुल्महरश्चैव सरः कुष्ठहरो 'धंन्व' । ' कैये' स्निग्धः श्वासहरो हृद्यः प्रोक्तो भिषग्वरैः ॥८०॥ 'मंद' श्लेष्मानिलहरःसमोक्तो भिषगुत्तमैः । १२ सरल।म०,गु० सरल देवदार। सरलः पूतिकाष्ठ च उग्रः ॰नद्रुरुच्छ्रितः ॥ ८१ ॥ स्निग्धदारुस्तथा दीपतरुर्मारीचपत्रकः । स्निग्धश्चैव तथा प्रोक्तो 'राजनामनिघंटके'॥८२॥ ' धन्व ' प्रोक्तो दीपवृक्षश्चीडा पीतद्रुमस्तथा । मदनो सुरदारुश्च खलिद्रुमस्तथा ' कये ' ॥ ८३ ॥ नमेरुश्च महावीर्यो ' मदने ' परिकीर्तित. । मदनो धूपवृक्षश्च चडा सुरभिदारुकः ॥ ८४ ॥ भद्रदारुः पीतदारुः पीतवृक्षः फलिद्रुमः। तथा सुरभिदारुश्च सप्रोक्तो वैद्यनायकैः॥८५॥ गुणाः । सरलः कटुतिक्तोष्णः कफवातविनाशनः । त्वग्दोषशोफकण्डूतिव्रणघ्नः कोष्ठशुद्धिदः ॥ ८६ ॥ ' नृपे ' प्रोक्तस्तथा ' भावे ' युकास्वेदहरः स्मृतः । वक्रसावग्वग्भ्रशनेत्ररोगप्रणान्तकृत् ॥ ८७ ॥ 'धन्वे' प्रोक्तस्तथा ' कैये ' कासकण्ठरुजापहः । मधुरो रसपाके च कटुस्निग्धस्तथैव च ॥ ८८ ॥ १३ कुंकुम।म०केशर ।गु० केसर। काश्मीरज तु काश्मीर कुंकुम त्वाग्निशेखर । असृग्वरं शठ रक्त बाह्लिकं शोणितं मत ॥ ८९ ॥ पीतक रुधिर गौरं कात वह्निशिखं तथा । घुसृण पिशुन चैव वरेण्य त्वरुण स्मृत ॥९०॥ कालेयक जागुड च स्यात्केसरवर 'नृपे'। अस्र चारु च सकोच समोक्त'धन्वनामके'॥९१॥काश्मीरजन्माग्निशिखं धीर लोहितचदन । बाह्लिक पीतन 'कोशे' त्वसाह्व 'मदनपालके' ॥ ९२॥ वर्ण्य पीत तु सप्रोक्त तथैव वरयोनिक । सौरभ केसर पत्र दीपक कुसु-

जित् ॥ २२ ॥ किलासकफदौर्गंध्यवातालक्ष्मीमलापहा । प्रोक्ता ' राजनिघंटे ' तु तथा ' धन्वंतरौ ' स्मृता ॥ २३ ॥ विषघ्नी दोषशमनी हृद्या बस्तिविशोधनी । उष्णा कफादिच्छर्दिघ्नी शोथवातहरा ' मदे ' ॥२४॥ मुखशोषहरा वृष्या प्रोक्ता ' गणनिघंटके ' । कामरूपोद्भवा श्रेष्ठा नैपाली मध्यमा भवेत् ॥ २५ ॥ काश्मीरदेशसंभूता कस्तूरी ह्यधमा मता । कामरूपोद्भवा कृष्णा नैपाली नीलवर्णयुक् ॥ २६ ॥ काश्मीरी कपिलच्छाया कस्तूरी त्रिविधा ' भवे ' । १७ गोरोचन । म०, गु० गोरोचन । गोरोचना रुचिः शोभा रुचिरा शोभना शुभा ॥ २७ ॥ गौरी च रोचना पिंगा मंगल्या पिंगला शिवा । पीता च गोमती भव्या वंदनीया च कांचनी ॥ २८ ॥ मेध्या मनोरमा श्यामा रामा ' राजनिघंटके ' । पावनी वंदनी योग्या मांगल्या गौतमी ' धने ' ॥ २९ ॥ रक्षा गोपित्तजा वश्या ' कैयदेवनिघंटके ' । वंद्या तु ' मदने ' प्रोक्ता ' गणे ' चैव ग्रहापहा ॥ ३० ॥ तथा वैद्यैस्तु संप्रोक्ता श्यामा गोपित्तसंभवा । गुणाः । गोरोचना कृमिघ्नी च शीता रुच्या तु पाचनी ॥ ३१ ॥ विषघ्नी कुष्ठहंत्री च वश्या भूतग्रहापहा । शृंगारवर्द्धिनी चैव मंगला जनमोहिनी ॥ ३२ ॥ ' नृपे ' प्रोक्ता तथा ' धन्वे ' नेत्ररोगहरा मता । सौभाग्यकरणी प्रोक्ता ' द्रव्ये ' वृष्या तथा स्मृता ॥ ३३ ॥ उन्मादगर्भस्रावघ्नी क्षतासघ्नी च ' कैयके ' । १८ कर्पूर । म० कापूर । गु० कपूर । कर्पूरो घनसारश्च शीतः शीतकरस्तथा ॥ ३४ ॥ शशांकः शांभवश्चंद्रः शीतांशुर्हिमवालुका । शिला हिमकरो गौरस्तुषारो मिहिका तथा ॥ ३५ ॥ शीतप्रभस्त्वभ्रसारस्ताराभ्रः कुमुदस्तथा । चंद्रालोकस्तमेदुश्च शुभ्रांशुः स्फटिको ' नृपे ' ॥ ३६ ॥ वेधको रेणुसारश्च सिताभ्रः स्फटिकोपमः । भस्माह्वयो हिमांशुश्च नक्षत्रेशो निशापतिः ॥ ३७ ॥ भस्मवेधो विधुः श्वेतस्तरुसारो हिमाह्वयः । मुक्ताफलं तु राजार्हं शशी त्वभ्रं हिमोपलः ॥ ३८ ॥ शीताह्वः शीतरश्मिश्च हिमः शीतरजः स्मृतः । सिताभः शीतलरजस्तुहिनश्चंद्रसंज्ञकः ॥ ३९ ॥ भूतिकश्चंद्र-

मरमश्च हिमाभ्रश्चंद्रनामकः । १९ पोतास । म०, गु० भीमसेनी कापूर ।
पोतासो भीमसेनश्च पांशुः सितकरस्तथा ॥ ४० ॥ शकरावाससञ्ज्ञश्च
पिंजो हिमयुतो हिमः । अब्दसारो वालुका च जूटिका शीतलस्तथा
॥ ४१ ॥ तुषारः पत्रिकाख्यश्च प्रोक्तो ' राजनिघंटके ' । कर्पूरलक्ष-
णानि । शिरो मध्यं तलं चेति कर्पूरस्त्रिविधः स्मृतः ॥ ४२ ॥ शिर-
स्तंभाग्रसंजातं मध्यं पर्णतले तल । . मास्वद्विशदपुलकं शिरोजात तु
मध्यमं ॥ ४३ ॥ सामान्यपुलकं स्वच्छं तले चूर्णं तु गौरकं । स्तंभगर्भस्थित
श्रेष्ठं स्तंभबाह्ये च मध्यमं ॥ ४४ ॥ स्वच्छमीषद्धरिद्राभं शुभ तन्मध्यमं
स्मृतं । सुदृढं शुभ्ररूक्षं च पुलकं बाह्यजं वदेत् ॥ ४५ ॥ अपि च ।
स्वच्छ भृंगारपत्रं लघुतरविशदं तोलने तिक्तकं चेत्स्वादे शैत्यं सुहृद्य
बहलपरिमलामोदसौरभ्यदायि । निःस्नेह दार्ढ्यपत्रं शुभतरमिति चेन्नाज-
योग्यं प्रशस्तं कर्पूरं चान्यथा चेद्बहुतरशमनं स्फोटदायि व्रणाय ॥ ४६ ॥
गुणाः । कर्पूरः शिशिरस्तिक्तः स्निग्धश्चोष्णोऽस्रवाहवः । चिरस्थो
दाहदोषघ्नः स पोतः शुभकृ ' न्नृपे ' ॥४७॥ तृष्णेदोविषदोषघ्नं चक्षुष्य
मदकारकं । ' धन्वे ' प्रोक्त तथा ' द्रव्ये ' मेहघ्नो गरनाशनः ॥४८॥
' कैये ' तु कफशोषघ्नो मुखवैरस्यनाशनः । २० चीनकर्पूर । म०,
गु० चिनी कापूर । चीनकश्चीनकर्पूरः कृत्रिमो धवलः पटुः ॥ ४९ ॥
मेघसारस्तुषारश्च द्वीपकर्पूरजो ' नृपे ' । गुणाः । चीनकः कटुतिक्तोष्ण
ईषच्छीतः कफापहः ॥ ५० ॥ कंठदोषहरो मेध्यः पाचनः कृमिनाशनः ।
२१ जवादि । म०, गु० जवादी कस्तूरी । जवादिर्गंधराज स्यात्कृत्रिम
मृगचर्मजम् ॥ ५१ ॥ समूहगंध गंधाढ्य स्निग्धं साम्राणिकर्दम । सुगंधं
तैलनिर्यासं कुटामोदं तु ' राजके ' ॥ ५२ ॥ मार्जारिका पूतिका च
' कैयदेवनिघंटके ' । ' द्रव्ये ' पूतिकजा चैव मार्जारी मधनेलिका
॥ ५३ ॥ गंधमार्जारवीर्यं च प्रोक्तो ' भावप्रकाशके ' । मार्जारगंधमुख्या
च गंधमार्जारवीर्यजा ॥ ५४ ॥ गंधमार्जारजा पूतिर्गंधचेली तथा स्मृता ।
बहुगंधा वेधमुख्या प्रोक्ता वैद्यविशारदैः ॥ ५५ ॥ गुणाः । सौगंधिकं

तुरुष्को यावनो धूम्रो धूम्रवर्णः सुगंधिकः ॥ २२ ॥ सिल्हको सिल्हसारश्च पीतसारः कपिस्तथा । पिण्याकः कपिजः फल्कः पिंडितः पिंडतैलकः ॥ २३ ॥ फरेवरः कृत्रिमको लेपनो ' राजनामके ' । कपितैलं मुक्तिमुकः पिंगलः कृत्रिमस्तथा ॥ २४ ॥ सुगंधिः पिंडकश्चैव कृतको ' धन्वनामके ' । यावनः पंडितो धूमः कपिलः कपिशस्तथा ॥ २५ ॥ कृतपिंडीतकः प्रोक्तः ' कैये ' यवनदेशजः । पिंडतैलोऽश्मपुष्पश्च यावनः कपिनामकं ॥ २६ ॥ सिल्हश्च वृकधूपश्च तैलं चंचलतैलकः । गुणाः । तुरुष्कः सुरभिस्तिक्तः कटुस्निग्धश्च कुष्ठजित् ॥ २७॥ कफपित्ताश्मरीमूत्राघातभूतज्वरापहः । ' नृप ' ' मंद ' कांतिकृच कटूष्णः शुक्रकृत्तथा ॥ २८ ॥ वृष्यः स्वेदहरो ' भावे ' ज्वरदाहग्रहापहः । ' गणे ' तु वातपिटिकाक्लेदहा कफपित्तहा ॥ २९ ॥ २७ गुग्गुलु । म० गुग्गळ । गु० गुगळ । गुग्गुलुः पवनद्विष्टो भवाभीष्टो निशाटकः । जटालः कालनिर्यासः पुरोभूतहरः शिवः ॥ ३०॥ कौशिकः शांभवो दुर्गो यातुघ्नो महिषाक्षकः । देवेष्टो मरुविष्टोऽपि रक्षोहा रूक्षगंधकः ॥ ३१ ॥ दिव्यस्तु महिषाक्षश्च प्रोक्तो ' राजनिघंटके ' । नक्तंचरो जटायुश्च ' धन्वतरिनिघंटके ' ॥ ३२ ॥ उलूखलं निशाचारी ' कैये ' तु शिवधूपकः । पलंकषा निशाशायी कुमुदो यामिनीचरः ॥ ३३ ॥ कुंभोलूखलकं कुंभं स्यात्कुलूखलकं तथा । उदूखलं देवधूपो गुग्गुलः पवनद्विषः ॥ ३४ ॥ उपः कुती च धूकश्च उद्दीपस्तु निशाचरः । सर्वसहस्तथा प्रोक्तो वैद्यविद्याविशारदैः ॥ ३५ ॥ गुणाः । गुग्गुलुः कटुतिक्तोष्णः कफमारुतकासजित् । कृमिवातोदरप्लीहशोफार्शोघ्नो रसायनः ॥ ३६ ॥ प्रोक्तो ' राजनिघंटे ' तु तथा 'धन्वंतरौ स्मृतः ' । कषायी पिच्छलो वर्ण्यः स्वर्यः सूक्ष्मश्च रूक्षकः ॥३७॥ स्निग्धः सरो लघुश्चैव बस्तिभेदाग्निवर्धकः । भग्नघ्नो मेहशोफघ्नो विशदस्तीक्ष्ण एव च ॥ ३८ ॥ स नवो बृंहणो वृष्यः पुराणस्त्वतिलेखनः । ' कैये ' तु दीपनो बल्यो भग्नसंधानकारकः ॥ ३९ ॥ ग्रंथिगंडापची-

घ्नश्च वातरक्तविनाशनः। आमकडूकृमिघ्नश्च कुष्ठघ्नस्तु विषघ्नकः ॥४०॥ गंडमालाऽश्मवातघ्नः प्रोक्तो 'भावप्रकाशके'। मांसवृद्धिकरः प्रोक्तो रक्षोघ्नो 'गणनामके' ॥ ४१ ॥ ३८ कणगुग्गुलु। म०, गु० कणगुग्गुळ। गंधराजः स्वर्णकणः सुवर्णः कणगुग्गुलुः। कनको वशपीतश्च सुरसश्च पलंकषा ॥४२॥ गुणाः। कणगुग्गुलुः कटूष्णश्च सुरभिर्वातशूलहृत्। कफगुल्मोदराध्मानहरश्चैव रसायनः ॥ ४३ ॥ ३९ भूमिजगुग्गुल। म०, गु० भुमिगुग्गुळ। गुग्गुलुश्च तृतीयोऽन्यो भूमिजा दैत्यमदजः। दुर्गाह्लाद इडाजात आशादि रिपुसंभवः ॥ ४४ ॥ मज्जाजो मेदजश्चैव महिषासुरसंभवः। गणाः। गुग्गुलुर्भूमिजस्तिक्तः कटूष्णः कफवातजित् ॥ ४५ ॥ उमामियश्च भूतघ्नो मेध्यः सौरभ्यदो 'नृप' ।४० राल। म० राळ। गु०राल। रालः सर्जरसश्चैव शालः कनकलोद्भवः ॥४६॥ ललनः शालनिर्यासो देवेष्टः शीतलस्तथा। बहुरूपः शालरसः सर्जनिर्यासकस्तथा ॥ ४७ ॥ सुरभिः सुरधूपश्च यक्षधूपाऽग्निवल्लभः। कालः कलपजः प्रोक्तो 'राजनामनिघंटके' ॥ ४८ ॥ रवः क्षणो महारूपः सुरालो धूपनस्तथा। सुधूपः क्षणकः सर्जस्त्वरालो धूनकः स्मृतः ॥४९॥ तथा सर्वरसः प्रोक्तो भिषग्विद्याविशारदैः। गुणाः। रालस्तु शिशिरः स्निग्धः कषायस्तिक्तसंग्रहः ॥ ५० ॥ वातपित्तहरस्फोटव्रणकडूहरो 'नृप'। विपादिभूतहंता च भग्नसंधानकृन्मतः॥५१॥ स्वादुश्चोष्णः स्तभनश्च 'धन्वे' तु व्रणरोपणः। अतिसार हरो 'भावे' शूलस्वेदज्वरापहः ॥ ५२ ॥ रक्तदोषविसर्पघ्नो ग्रहघ्ना 'कैयदेवके'। 'गणे' तु श्लेष्मपित्तघ्नो ह्यग्निदग्धव्रणघ्नकः ॥ ५३ ॥ ४१ कंदरु। म० सालईचा डींक। गु० कुंदरु, साळेडाना गुंद। सौराष्ट्रः कुदकस्तीक्ष्णः पालिंदः शिखरी च सः। तथा कुंदुरुकः कुदरुको गोपुरकः स्मृतः ॥ ५४ ॥ बहुगंधो भीषणश्च प्रोक्तो 'राजनिघंटके'। धन्वे तु गोपुरः कुंदः कुंदरश्च तथा बली ॥ ५५ ॥ सुकुंदस्तीक्ष्णगंधश्च मेचकः खपुरो 'द्रवे'। मुकुंदः कुंदुरुः कुंदुः पलकी 'कोशके' तथा ॥ ५६ ॥ 'वैये' तु

मेदुरः स्वाक्षो नागश्रीवल्लभः परः । तथा ' गणनिघंटे ' तु प्रोक्तो नाग-चधूप्रियः ॥ ५७ ॥ शल्लीनिर्यासकश्चैव प्रोक्तो वैद्यविशारदैः । गुणाः । कुंदुरुर्मधुरस्तिक्तः कफपित्तार्तिदाहनुत् ॥ ५८ ॥ पाने लेपे च शिशिरः प्रदरामयहा ' नृप ' । ' धन्वे ' तु कटुकः प्रोक्तो वातश्लेष्मामयापहः ॥ ५९ ॥ रक्तप्रदरहा ' द्रव्ये ' ' भावे ' तु मुखरोगहा । ज्वरघ्रा स्वेदहा ' कैये ' यूकाऽलक्ष्मीग्रहघ्नकः ॥ ६० ॥ ' मदे ' वृषभ्रद्वरः प्रोक्तस्तथा ' शोढलके ' स्मृतः । शर्करासहितो मेहं वृषणस्य व्यथां हरेत् ॥ ६१ ॥ ४२ कुष्ठ । म० कोष्ठ । गु० कुठ, उपलेट । कुष्ठं रुजाप्रदो व्याधिरामयं पारिभद्रक । रामं वानीरज वाप्यं क्लेबं स्वादोपमुत्पल ॥ ६२ ॥ कुत्सं हापाटवं चैव पद्मकं ' राज-नामके ' । कौबेर पाकजं रोगः पाकलं ' धन्वनामके ' ॥ ६३ ॥ रोमाह्वयं तु कौबेरं पारिभव्यं गदाह्वयं । मासुरं पारिभाव्यं च गदाख्यं बाष्पसंज्ञितं ॥ ६४ ॥ व्याप्यं मास तु किंजल्कमामं ह्याप्यं तु पावन । परिहार्यं क्रदाख्यं च कुडिकं हरिभव्यकं ॥ ६५ ॥ हरिभद्रकसंज्ञं तु रुक् तथोत्पलकुष्ठकं । गुणाः । कुष्ठं कटूष्णं तिक्तं स्यात्कफमारुतकुष्ठ-जित् ॥ ६६ ॥ विसर्पविषकंडूतिखर्जुदद्रुघ्नकांतिकृत् । ' नृप ' ' धन्वे ' त्रिदोषघ्न रक्तजिच्च तथा स्मृतं ॥ ६७ ॥ ' गणे ' रसायनो वृष्यः 'कैये' वातास्रकासजित् । वांतितृष्णाहरो ' द्रव्ये ' ' मदे ' शत्रुप्रदः स्मृतः ॥ ६८ ॥ ४३ **सारिवा** । म. श्वेत उपलसरी, पांढरी कावळी । गु० धोळी उपलसरी, कपुरी काळी वेल । सारिवा शारदा गोपा गोपवल्ली प्रतानिका । गोपकन्या लताऽऽस्फोता श्वेता स्यात्काष्ठसारिवा ॥ ६९ ॥ प्रोक्ता ' राजनिघंटे ' तु तथा धवलसारिवा । स्फोता गोपांगना गोपी शारिवा फणिजिह्विका ॥७०॥ गौरा सुगंधमूला च सुगंधा तु सुगंधिका। गोपालिका कराला च त्वहिजिन्हा कृशोदरी ॥७१॥ गोपिनी फणिजिह्वा च नागजिह्वा तु शारदी। तथा गोपवधूः प्रोक्ता गोपिका वैद्यनायकैः ॥ ७२ ॥ ४४ **कृष्णसारिवा** । म० काळी उपलसरी, काळी कावळी । गु० काळी

उपलसरी । मारिवाऽन्या कृष्णमूला कृष्णा चंदनसारिवा । भद्रा चंदनगोपा तु चदना कृष्णवल्ल्यपि ॥ ७३ ॥ प्रोक्ता ' राजनिघंटे ' तु तथैवोत्पलसारिवा । श्यामाऽनंता महाश्यामा कालिंद्युत्पलशारिवा ॥ ७४ ॥ भद्रवल्ली महागोपी तथा कालानुमारिणी । स्याद्भद्रवल्लिका प्रोक्ता तथा चदनमूलिका ॥ ७५ ॥ महागोपा तथा ज्ञेया सप्रोक्ता कृष्णवल्लरी । स्यात्कृष्णसारिवा चैव प्रोक्ता वैद्यविशारदैः ॥ ७६ ॥ गुणाः । सारिवायुगलं स्वादु कफवातास्रनाशनं । कुष्ठकंडुज्वरहर मेहदुर्गंधिनाशनं ॥ ७७ ॥ ' नृप ' ' द्रव्य ' तु पित्तघ्नं वृष्य ह्यामज्वरघ्नकं । कफरक्तगरघ्नं च तृष्णादाहहरं ' गणे ' ॥ ७८ ॥ कासघ्नं स्वतिसारघ्न त्रिदोषघ्नं तु ' कैयर्के ' । रक्तप्रदं विपघ्न च ह्यामातीसारहृत्तथा ॥ ७९ ॥ अग्निमाद्यारुचिश्वासवमिकासतृषापह ।दोपत्रयास्रप्रदरज्वरातीसारनाशनं॥८०॥ गुरु शुक्रकरं स्निग्धं प्रोक्तं ' मदनपालके ' । ' शोढले ' रक्तपित्तास्रविषमज्वरनाशनं ॥ ८१ ॥ शिरोरोगहर चैव प्रोक्तं वैद्यविशारदैः । कृष्णमूली तु संग्राहिशिशिरा कफपित्तजित् ॥ ८२ ॥ तृष्णारुचिप्रशमनी रक्तपित्तहरा ' नृपे ' । ४५ नख । म०, गु० नखला ( प्राणिज द्रव्य ) ।नखः कररुहः शिल्पी शुक्तिशंखः खुरः शफः ॥८३॥ चलः कोशी च करजा हनुर्नागहनुस्तथा । पाणिजो बदरीपत्रा धूप्यः पण्यविलासिनी ॥ ८४ ॥ संधिनालः पाणिरुहः प्रोक्तो ' राजनिघंटके ' । तथा कोलदलं चैव नखी हट्टविलासिनी ॥ ८५ ॥ चलकन्नू नखाह्वश्च नखाको नखरः खरः । सहः करस्तु निर्लोमं नखरी बदरिच्छदः॥८६॥ बदरीपत्रकश्चैव तथा करकचः स्मृतः । गुणाः । नखः स्वादुष्णकटुको विष हन्ति प्रयोजितः ॥ ८७ ॥ कुष्ठकंडूव्रणघ्नश्च भूतविद्रावणो ' नृप ' । ' धन्वं ' कफघ्नकः प्रोक्तो ' मदे ' वन्यं तु शुकल ॥ ८८ ॥ लघु हृद्य तथा प्रोक्त वातास्रज्वरनाशनं । मेध्य तु वातपित्तघ्न हर्षिम ' द्रव्यरत्नके ' ॥ ८९ ॥ अलक्ष्मीमुखदौर्गंध्यनाशनं कांतिदं ' भे ' । ४६ व्याघ्रनख । म० वाघनख, लघु नखला, हा एक सुगंधी द्रव्य प्रसिद्ध

अश्मवल्कः शिलावल्को हिमवासी हिमप्रियः। सौमनस्यं सुखकरं गंधाढ्यं प्रियदर्शनं ॥२४॥ शिलार्कं शैलिजं प्रोक्तं तथा कालानुसारिणी । शिलाभवं तु संप्रोक्तं भिषग्विद्याविशारदैः ॥ २५ ॥ **गुणाः**। शैलेयं शिशिरं तिक्तं सुगंधि कफपित्तजित् । दाहतृष्णावमिश्वासव्रणदोषहरं 'नृप' ॥ २६ ॥ रक्तदोषहरं 'धन्वे' विषकण्डूविनाशनं। श्लेष्मज्वरहरं रुच्यं हृद्रोगाश्मरिनाशनं ॥ २७ ॥ कुष्ठघ्नं तु तथा 'कैये' रक्तगुल्महरं 'भव'। ५१ **चोरकं**। म० भटोरा, गठोन्याचा भेद, हा नेपाळांत प्रसिद्ध आहे। गु० भटेडर. भटोरा। चोरकः शंकितश्चंडा दुष्पत्रः क्षेमको रिपुः ॥ २८ ॥ चपलः कितवो धूर्तः पटुर्नीचो निशाचरः। गणहासः कोपनकश्चोरकः फलचोरकः ॥ २९ ॥ दुष्कुलो पर्णचोरश्च 'राजनामनिघंटके'। 'कोशे' धनहरी क्षेमा राक्षसी गणहासकः ॥ ३० ॥ चंडस्तु तस्करश्चौरी शठी धनहरस्तथा। गोपनो दुष्कुलीयश्च दौष्कुलेयस्तु चामरः ॥ ३१ ॥ तथा शंखिनिका चैव कौशिका कृमिका स्मृता। क्रोधना तु तथा प्रोक्ता वैद्यविद्याविशारदैः ॥ ३२ ॥ **गुणाः**। चोरकस्तीव्रगंधोष्णस्तिक्तो वातकफापहः । नासामुखरुजाजीर्णकृमिदोषहरो 'नृप' ॥ ३३ ॥ विषरक्तहरो 'धन्वे' कुष्ठकंडूव्रणघ्नकः समीरघ्नस्तथा 'कैये' रक्षःस्वेदज्वरघ्नकः ॥ ३४ ॥ मोहघ्नो मधुरो रूक्षो हिमहृत्कुष्ठकंडूहृत्। 'भावे' मेदोहरः प्रोक्तो 'गणे' त्वग्दोषहारकः ॥ ३५ ॥ ५२ **ग्रंथिपर्ण**। म०, गु० गठोना, हा आसामांत होतो। ग्रंथिपर्णो ग्रंथिदलो ग्रंथिपत्रस्तु गुच्छकं । ग्रंथिभेदिदलं चैव ग्रंथिकं गुच्छकच्छदं ॥३६॥ ग्रंथिका ग्रंथिपर्णी च ग्रंथिलो नीलपुष्पकं। सुग्रंथिर्ग्रंथिपर्णश्च शुकपुष्पं शुकच्छदं ॥ ३७ ॥ काकपुष्पं तथा प्रोक्तं सुगंधं तैलपर्णकं। **ग्रंथिपर्णलक्षणं**। ग्रंथिकः पांडुरः किंचित् कनिष्ठांगुलिसन्निभः ॥ ३८ ॥ उत्तमः कृष्णवर्णो यः स्थूलोतीव च निंदितः। शुष्कः संस्वेद्य गोमूत्रे कुंकुमेनैव वासयेत् ॥ ३९ ॥ इति डल्हणमिश्रः। **गुणाः**। ग्रंथिपर्णो लघुस्तिक्तो रुच्योष्णः कफवात-

जित् । ' नृपे ' प्रोक्तस्तथा ' भाव ' दीपनः कटुकस्तथा ॥ ४० ॥ विषश्वासहरश्चैव कंटूदार्गध्यनाशनः । ५३ पद्मक । म० पद्मकाष्ठ, याचा वृक्ष हिमालयावर होतो । गु० पद्मकर्न लाकडु । पद्मक पीतक पीत मालय शीतल हिम ॥ ४१ ॥ शुभ्र कसरज रक्त पाटलापुष्प-सन्निभ । पद्मकाष्ठ पद्मवृक्ष प्रोक्त ' राजनिघंटके ' ॥ ४२ ॥ ' धन्व ' तु मलयश्चारु. पीतरक्तः सुराद्भवः । सुप्रभः शीतवीर्यश्च पाटलापुष्पव-र्णकैः ॥ ४३ ॥ पद्मवर्ण हमपद्म पद्मगधिर्मरुत्स्थित. । ' कये ' पद्मा-ह्वय ' भावे ' हेमपत्र ' गणे ' स्मृत ॥ ४४ ॥ पद्मगंध शुभं चैव प्रोक्त वैद्यविशारदैः । गुणाः । पद्मक शीतल तिक्त रक्तपित्तवि-नाशन ॥ ४५ ॥ मोहदाहज्वरभ्रांतिकुष्ठविस्फोटहृ ' न्नृपे ' । ' धन्वे ' भ्रांतिहर' कये ' वातल तु तृषापह ॥ ४६॥ विषपित्तकफास्रघ्न व्रणवातिविम-र्दहृत् । गर्भस्थापनक चैव तुवर सप्रकीर्तित ॥ ४७ ॥ ५४ प्रपौंडरीक। म० । पुंडरीकवृक्ष । गु० पाडेरवा । प्रपौंडरीक चक्षुष्य पुंडर्य पुंडरी-यक । पौंडर्य च सुपुष्प च सानुज चानुन ' नृपे ' ॥ ४८ ॥ श्रीपुष्प सितपुष्प च पौंडरीयं तु ' धन्वके ' । ' कैयदेवे ' स्मृत नून पौंड्राह्व पुंड्रमेव च ॥ ४९ ॥ तथा ' मदनपाल ' च श्वेतपुष्प प्रकीर्तित । एक-मूल ऋषिश्रेष्ठ पुंडरीक शुचिव्रत ॥ ५० ॥ तथा मुनिवर प्रोक्त पुंडरी-मूलसाधन । मूलशोधनक चैव समाक्त वैद्यनायकैः ॥ ५१ ॥ गुणाः । प्रपौंडरीक चक्षुष्यं मधुर तिक्तशीतल । पित्तरक्तव्रणान्हति ज्वरदाहतृपा-पह ॥५२॥ ' नृप ' च शुक्रलं ' भावे ' श्लेष्मल पित्तनाशनं । ५५ लाम-ज्जक । म० पांढवाळा । गु० वाळा वाळो, सुगंधि पीळु खड, अथु वाला । लामज्जक सुनाल स्यादमृणाल लघु लघु ॥ ५३ ॥ इष्टकाप-थिक शीघ्र दीर्घमूल जलाश्रय । प्रोक्त ' राजनिघंट ' तु तथा लघुलय हिम ॥ ५४ ॥ अवदाह जलाधारमवदाहेष्टकापथ । तथष्टकापथ चैव तोयज स्वदाहकं ॥ ५५ ॥ मृणाली स्वदाहेष्ट क्षितिज तु जलाशय । तथा जलवगवार समाक्त तु नदपद ॥ ५६ ॥ गुणा- ।

## ११ अनुक्तौषधिवर्गः

१ श्वेतवृंताक । म० पांढरें वांगें । ततस्तु श्वेतवृंताकं कुक्कुटांडोपमं फलं ॥ ८९ ॥ ' धन्वंतरिनिघंटे ' तु संप्रोक्तं भिषजां वरैः । गुणाः । श्वेतवृंताकमर्शोघ्नं रुचिदं तु गुणाधिकं ॥ ९० ॥ २ किंकिरात । म० फंक्री, कोकई, देवबाभूळ । दे० नेडी बाभूळ । किंकिरातः किंकिरादः पीतकः पीतभद्रकः । हेमगौरो विमलंवी षट्पदानंदवर्धनः ॥९१॥ ' धन्वे ' प्रोक्तस्तथा ' द्रव्ये ' कोकई चेति विश्रुता । तथैव भिषजां नाथैः प्रोक्ता षट्पदमोदिनी ॥ ९२ ॥ गुणाः । किंकिरातो भवेदुष्णस्तिक्तः कफविनाशनः । अर्शसां निचयं हंति शोफसंघातनाशनः ॥ ९३ ॥ किंकिरातोद्भवं पुष्पं सुगंधि हर्षपुष्टिदं । ' धन्वे ' प्रोक्तं तथा ' भावे ' हिमः पित्तकफप्रकः ॥ ९४ ॥ पिपासाशोषवांतिघ्नस्तथा कृमिहरः स्मृतः । कषायो रक्तदाहघ्नः श्लेष्मज्वरहरो ' द्रव ' ॥ ९५ ॥ ३ चपल । म० चपल धातु, जस्ताचा भेद । गौरः श्वेतोऽरुणः कृष्णश्चपलश्च चतुर्विधः । हेमाभश्चैव ताराभो विशेषाद्रसबंधनौ ॥ ९६ ॥ चपलश्चैव संप्रोक्तश्चोज्ज्वलः स्फटिकोपमः । शेषौ तु मध्यौ लाक्षावच्छीघ्रद्रावौ तु निष्फलौ ॥ ९७ ॥ वंगवद्द्रवते वह्नौ चपलस्तेन कीर्तितः । गुणाः । चपलो लेखनः स्निग्धो देहलोहकरस्तथा ॥ ९८ ॥ रसराजसहायः स्यात्तिक्तोष्णो 'मधुरो मतः । चपलः स्फटिकच्छायः षडस्रिः स्निग्धको गुरुः ॥ ९९ ॥ त्रिदोषघ्नोऽतिवृष्यश्च रसबंधकरो ' धने ' । ४ प्राचीनामलक । म० पाण आंवळी । प्राचीनामलकं प्राची नागरं रक्तकं ' धने '॥ ४१०० ॥ अंबुजामलकी रक्ता नागरा ' द्रव्यरत्नके ' । पानीयामलकं प्रोक्तं 'मावनामनिघंटके'॥१॥ गुणाः । प्राचीनामलकं रुच्यं गुरूष्णं गरवातहृत् । तत्पक्वं पित्तकफहृद्दुर्जरं गुरु वातजित् ॥ २ ॥ प्रोक्तं ' धन्वनिघंटे ' तु भिषग्विद्याविशारदैः । प्राचीनामलकं ' द्रव्ये ' कफवाततृषाप्रकं ॥ ३ ॥ दोषत्रयहरं ' भावे ' ' कैयोक्तं ' कफपित्तहृत् । ५ साराम्ल । म० साराम्ल,

नदीभल्लातकः ' कये ' । गुणाः । वृषांकस्तु भवेत्तिक्तः कषायो मधुरो हिमः ॥ २२ ॥ संग्राही वातलश्चैव कफरक्तादिपित्तहा । व्रणहेति भिषक्श्रेष्ठैः प्रोक्तः ' कैयनिघंटके ' ॥ २३ ॥ १० वाताम । म० बदाम । वातामस्त्वनिलांतश्च युग्मशुक्तिपुटोपमं । सुफलं ' द्रव्यरत्ने ' तु वातवैरिस्तथा ' मदे ' ॥ २४ ॥ नेत्रोपमफलं चैव बादामं संप्रकीर्तितं । गुणाः । वातामो गुरुस्निग्धश्च रसे पाके मधुस्तथा ॥ २५ ॥ वृष्यश्चोष्णो बृंहणश्च बल्यो वातहरो ध्रुवं । कफकृद्दाहपित्तघ्नः क्षतक्षयविनाशनः ॥ २६ ॥ विष्टंभहृ ' स्कैयदेवे ' ' द्रव्ये ' शुक्रकरस्तथा । पित्तानिलहरा मज्जा स्निग्धा तु कफकारिणी ॥ २७ ॥ रक्तपित्तकरा चोष्णा प्रोक्ता ' मदनपालके ' । ११ मुकूलक । म० पिस्ते । पिस्तं मुकूलकं ज्ञेयं दंतीफलसमाकृतिः ॥ २८ ॥ गुणाः । मुकूलं दुर्जरं स्निग्धं वृष्योष्णं स्वादु बृंहणं । रक्तप्रसादनं बल्यं वातघ्नं कफपित्तहृत् ॥ २९ ॥ विशेषात्तु गुरु ज्ञेयं प्रोक्त ' मदनपालके ' । १२ निकोचक । म० जर्दालु । निकोचकं चारुफलमंकोट जलगोजकं ॥ ३० ॥ अंकोलफलसकाश निकोचं तु निकोटकं । तथैव चारुफलकं प्रोक्त वैद्यविशारदैः ॥ ३१ ॥ गुणाः । निकोचकं गुरु स्निग्धं वृष्योष्णं स्वादु बृंहणं । रक्तप्रसादनं बल्यं वातघ्नं कफपित्तहृत् ॥ ३२ ॥ १३ लवली । म० हरपररेवडी, रायआंवळी । घनस्कधो महाप्रांशुः प्रपुन्नाटसहक्छदः । सुगंधमूला लवली पांडुकोमलवल्कला ॥ ३३ ॥ ' कैयदेवनिघंटे ' तु संप्रोक्ता भिषजां वरैः । घनस्कधा तु संप्रोक्ता तथा कोमलवल्कला ॥ ३४ ॥ लवल्याः फलमुद्दिष्टं श्यामं ज्योत्स्नाफलं तथा । गुणाः । लवलीफलमस्रार्शःकफपित्तहरं गुरु ॥ ३५ ॥ विशदं रोचनं रूक्षं स्वाद्वम्लं तुवरं ' भवे ' । तथा ' कैयनिघंटे ' तु हृद्यं तिक्तं तु वातलं ॥ ३६ ॥ सुगंधि तु ' मदे ' प्रोक्त स्वशोघ्नं वातपित्तजित् । १४ कालशाक । म० कालशाक । कालिका कालशाकं च कालिकं ' कैयदेवके ' ॥ ३७ ॥ तथैव विपिनद्रुश्च कृष्णवर्णस्तु ' द्रव्यके ' । श्राद्धशाकं तथा ' भावे ' प्रोक्तं वैद्यविशारदैः ॥ ३८ ॥

**गुणाः** । कालिका कटुका क्षीरा तिक्ता पाचनदीपना । भेदनी वातला त्वर्शःकफशोफगरापहा ॥ ३९ ॥ 'कैये' 'द्रव्ये' सरा चोष्णा भिषग्भिः परिकीर्तिता । 'भावे' रुच्या तु बल्या च रक्तपित्तहरा हिमा ॥ ४० ॥ १५ **चतुष्पत्री** । म० सुणसुणा, चतुष्पत्री । वितुन्नः सुनिषण्णश्च तथा वितुन्नकः स्मृतः । चाटेरीपत्रसदृशः चतुर्दल इतीरितः ॥ ४१ ॥ शाको जलान्विते देशे चतुष्पत्रीति चोच्यते । **गुणाः**। चतुष्पत्री हिमा स्वादुः कषाया लघुदीपना ॥ ४२ ॥ त्रिदोषहरिणी रूक्षा हृद्या वृष्या च ग्राहिणी । ज्वरहृत् श्वासकुष्ठघ्नी मेहारुचिहरा ध्रुव ॥ ४३ ॥ प्रमह 'कैयदेवे' च समोक्ता वैद्यनायकैः । १६ **दुग्धिका** । म० दुधी। राजक्षवा दुग्धनिका दुग्धिका स्वादुपुष्पिका ॥ ४४ ॥ क्षीरावी क्षीरिका शीता शीतार्बुमधुपर्णिका । 'कैये' प्रोक्ता तथा 'द्रव्ये' क्षीरी तु क्षीरिणी तथा ॥ ४५ ॥ अपर्णिकाऽर्कपुष्पी च वैद्यनाथैः प्रकीर्तिता । **गुणाः** । दुग्धिका मधुरा तिक्ता गुर्वी क्षीरा कटुः पटुः ॥ ४६ ॥ रूक्षोष्णा वातला हृद्या सृष्टमूत्रमलापहा । विष्टंभिनी गर्भकारी कृमिकुष्ठकफापहा ॥ ४७ ॥ प्रोक्ता 'कैयनिघंटे' तु भिषक्शास्त्रपरायणैः । १७ **उच्चानका**। म० फुरडी, नागरमोथ्याचा भेद, इच्या मुळास कचऱ्याचे कद असें ह्मणतात । उच्चानका बद्धशिखा चूडाला चक्रलांचटा ॥ ४८ ॥ 'कैयदेवनिघंटे' तु संप्रोक्ता भिषजां वरैः । **गुणाः** । उच्चानका रसे पाके मधुरा ज्वरपित्तहृत् ॥ ४९ ॥ मुखशोषज्वरश्वासमेदतृष्णापहा 'कये' । १८ **शिरीषिका** । म० जलशिरस, पाणशिरस । शिरीषिका ढिंढिणिश दुर्लभा तु शिरीषिका ॥ ५० ॥ टिंटिणिका च सुफला दुर्लभा 'कैयदेवके' । शिरीषा तु तथा प्रोक्ता 'गणनामनिघंटके ॥५१॥ गुणाः। ढिंढिणी तु सरा चोष्णा कुष्ठार्शःकफपित्तहृत् । विषघ्नी सन्निपातघ्नी ढिंढिणी 'कैयदेवके' ॥५२॥ १९ **ब्रह्मसोमा**।म. श्वेतवरधारा। श्वेताख्यब्रह्मसोमा च स्वामिमधश्वतुर्गंगः। आग्नेयी च महाश्यामा वृद्धदारुक एव च ॥ ५३ ॥ 'कैयदेवनिघंटे'

तु भिषक्श्रेष्ठैर्निगद्यते । गुणाः । ब्रह्मसोमा कटुस्तिक्ता तीक्ष्णोष्णा दीपनी सरा ॥ ५४ ॥ पाचनी पित्तजननी कफकासविनाशनी । २० चोहार । म० किरमाणी ओंवा । चोहारश्चौरपूर्वश्च यवानी पारसीयकः ॥ ५५ ॥ जंतुनाशनसंज्ञश्च 'कैयदेवे' प्रकीर्तितः । 'द्रव्यरत्नाकरे' चैव चोराह्वः प्रोच्यते बुधैः ॥ ५६ ॥ गुणाः । चोहारस्तु कटुस्तिक्तस्तीक्ष्णस्तूष्णश्च दीपनः । वृष्यस्त्रीदोषहाऽजीर्णकृमिशूलहरा 'कये' ॥ ५७ ॥ २१ लताकस्तूरिका । म० मुसकदाणा । लताकस्तूरिका कट्वी कटुर्दक्षिणदेशजा । 'कैयदेवे' निगदिता वैद्यविद्याविशारदैः ॥५८॥ लताकस्तूरिका तिक्ता स्वाद्वी वृष्या लघुर्हिमा । चक्षुष्या श्लेष्मतृष्णाघ्नी प्रोक्ता वैद्यविशारदैः ॥ ५९ ॥ बस्तिरोगहरा 'भावे' मुखरोगविनाशनी । २२ अस्थिशृंखलिका । म० हाडसंधी, हाडसाखळ । वज्रवल्यस्थिसंहारो वज्रांगः कांडुचंटिका ॥ ६० ॥ प्रोक्ता 'कैयनिघंटे' तु ग्रंथिमान् 'द्रव्यरत्नके' । तथास्थिशृंखला चैव वज्रांगी वज्रवल्लरी ॥ ६१ ॥ वज्री 'मदनपाले' च संप्रोक्ता वैद्यनायकैः । गुणाः । अस्थिशृंखलिका शीता स्वाद्वी वृष्या बलप्रदा ॥ ६२ ॥ अस्थिसंधानी चैव श्लेष्मलानिलनाशिनी । २३ मृगदंती । म० मखमाल, झेंडू । मदा मला विरजनी मृगदंती खरस्वरा ॥ ६३ ॥ अलंबुसा गंधवती मदयंती वराक्वना । 'कैयदेवनिघंटे' तु संप्रोक्ता भिषजां वरैः ॥६४॥ गुणाः । मदा तु लघुस्वादुश्च 'कैये' पित्तकफापहा । २४ कंचुका । म० कोदी । कंचुका पेलुका पेलुः पेलिका दलशालिनी ॥६५॥ 'कैयदेवनिघंटे' तु संप्रोक्ता वैद्यनायकैः । गुणाः कंचुका तु कटुः पाके तिक्ता ग्राहिर्हिमा लघुः ॥ ६६ ॥ दीपना रोचना हृद्या कफपित्तज्वरापहा । कुष्ठकासप्रमेहघ्नी वातला 'कैयदेवके' ॥६७॥ २५ भूमिच्छत्र । म. भूइफोड, अळंबे । सर्पछत्रो भूमिकंदो भूमिस्फोटोऽहिछत्रकः । पृथ्वीस्फोटः शिलिंध्र कवचकः 'कैयदेवके' ॥ ६८ ॥ गुणाः । भूकंदो मधुरो वृष्यो बल्यो रूक्षो हिमो गुरुः । रोचनो दुर्जरो भेदी 'कैयदेवनिघंटके' ॥ ६९ ॥

सर्वदोषप्रकोपी स्या ' न्मदे ' पीनसकारकः । २६ **मानकंद** । म० मानकंद । मानकश्च महापत्रो तथा दीर्घदलः स्मृतः ॥ ७० ॥ महच्छदो महत्पत्रो मानकन्दः प्रकीर्तितः । **गुणाः** । मानकश्च गुरुः शीतो मधुरो रक्तपित्तहृत् ॥ ७१ ॥ कटुः शोफहरश्चैव वातलः प्रोच्यते बुधैः । २७ **राजकदंबक** । म० राजकळंब । सुगंधिपुष्पः स्वाद्वम्लः पक्वसस्यो महोन्नतः ॥ ७२ ॥ मधूकपत्रसदृशः पत्रो राजकदंबकः । फलराजकदंबश्च नीपराजकदंबकः ॥ ७३ ॥ नीपश्च ' कैयदेवे ' तु संप्रोक्तो वैद्यनायकैः । गुणाः । नीपं स्वादु कषायाम्लं गरदोषहरं ध्रुवं ॥ ७४ ॥ तत्फलं मधुरं शीतं गुरु पित्तास्रवातहृत् । २८ **जिंगिणी** । म० मोई, मोका, मोण । जिंगणी झिंगिणी झिल्ली मोदकी गुडमंजरी ॥ ७५ ॥ जातसारा च कलुषमंजरी काममंजरी । पार्वतेया सुनिर्यासा ' केये ' मदनमंजरी ॥ ७६ ॥ ' द्रव्यरत्नाकरे ' चैव झिंगी प्रोक्ता ' भिषग्जनैः । जिंगी तु झिंगिनी चैव ' माथे ' प्रोक्ता प्रमोदिनी ॥७७॥ सुनिर्यासा भिषक्श्रेष्ठैः ' गणे ' प्रोक्ता न संशयः । **गुणाः** । जिंगिणी मधुरा चोष्णा कषाया योनिशोधनी ॥ ७८ ॥ कटुपाका वातहरा व्रणहृद्रोगनाशनी । अतिसारहरा वैद्यैः प्रोक्ता ' कैयनिघंटके ' ॥ ७९ ॥ तन्निर्यासस्य नस्येन रोगबाहुस्पनाशनी । २९ **लोबान** । म० लोहबंदी ऊद । लोबानं द्रुमनिर्यासो धूपः सर्जश्च गौडजः ॥ ८० ॥ ' द्रव्यरत्ननिघंटे ' तु संप्रोक्तो वैद्यनायकैः । **गुणाः** । ततस्तु लोहबाणं च संग्राहि कफवातहृत् ॥ ८१ ॥ उष्णं व्रणघ्नं संप्रोक्तं वैद्यै ' द्रव्यनिघंटके ' । ३० **भूमंडली** । म० भूमडळी, जलमांडवी । भूमडली भिषक्श्रेष्ठे ' द्रव्यरत्नाकरे ' स्मृता ॥ ८२ ॥ **गुणाः** । भूमडली लघु हिमा गरपित्तकफापहा । ३१ **वनजा गंधनिशा** । म० वनआंबेहळद । वनजाऽन्या गंधनिशा गंधपत्री सुपाकिनी ॥ ८३ ॥ ' द्रव्यरत्नाकरे ' प्रोक्ता भिषड्नाथैर्न संशयः । **गुणाः** । अथ गंधनिशा तीक्ष्णा कफवाताग्निपित्तकृत् ॥ ८४ ॥ ३२ **मिष्टनिंब** । म० कढीनिंब । मिष्टनिंबश्च कैरातो रामणो रमण-

स्तथा। 'द्रव्यरत्ननिघंटे' तु भिषग्भिः परिकीर्तितः ॥ ८५ ॥ गुणाः। कैरातः शीतलस्तिक्तो दाहार्शःक्रिमिशूलहा। ३३ हन्वंती। म० हनुमंती। हैमवती तु हन्वंती करपत्रा हिमावती ॥ ८६ ॥ 'द्रव्यरत्नाकरे' प्रोक्ता वैद्यनाथैर्न संशयः। गुणाः। हन्वंती तुवरा वृष्या तद्बीजं ग्राहि मेहहृत् ॥ ८७ ॥ ३४ खुरसाना। म० खुरासनी ओंवा। यवानी तु खुरासानी यवाह्वा तु यवानिका। 'द्रव्यरत्नाकरे प्रोक्ता वैद्यविद्याविशारदैः ॥ ८८॥ पारसीकयवानी तु प्रोक्ता भावप्रकाशके'। यवानी यावनी चैव तीव्रा तु तदनंतरं॥ ८९ ॥ तुरुष्का मदकारीति 'मदे' प्रोक्ता भिषग्जनैः। गुणाः। खुरसाना कटूष्णा च ग्राहिणी श्लेष्मवातहृत् ॥ ९० ॥ पूर्वोक्ता 'द्रव्यरत्ने' च 'मदोक्ता' मादिनी गुरुः। 'भावे' तु पाचनी प्रोक्ता विशेषाद्वैद्यनायकैः ॥ ९१॥ ३५ तोयमंजरी। म० पाणअघाडा। तोयोद्भवस्त्वपामार्गो रामठस्तोयमंजरी। 'द्रव्यरत्नाकरे' चैव प्रोक्तो वैद्यविशारदैः ॥९२॥ गुणाः। तोयोद्भवः शोफहा च कासमारुतहा स्मृतः। ३६ आकल्ल। म० अक्कलकारा। आकारकरभश्चैवाकल्लकोथ ह्यकल्लकः ॥ ९३ ॥ तथा 'मदनपाले' तु संप्रोक्तो वैद्यनायकैः। गुणाः। आकल्लस्तु भवेदुष्णस्तीक्ष्णो बल्यश्च शोफहा ॥ ९४ ॥ श्लेष्मानिलहरः प्रोक्तः पूर्वोक्तैः सह 'द्रव्यके'। 'भावे' ऽग्निदीपनो वृष्यः कामदो मदकृत्स्मृतः ॥ ९५॥ ३७ तमालपत्र। म० तमालपत्री, सांभारपान। तमालपत्रं गोपश्च त्वक्पत्री याम्यदिग्भवा। 'द्रव्यरत्नाकरे' प्रोक्ता पुरातनचिकित्सकैः॥९६॥ गुणाः। तमालपत्रं वातघ्नं पित्तश्लेष्मशिरोर्तिहृत्। ३८ समुद्रशोष। म० समुद्रशोक। समुद्रशोषः सामुद्रो वार्द्धिशोषो सरित्पतिः ॥ ॥ ९७ ॥ 'द्रव्यरत्नाकरे' प्रोक्तो भिषग्विद्याविशारदैः। गुणाः। ततः समुद्रशोषस्तु संग्राही पिच्छलः स्मृतः ॥ ९८ ॥ अग्निरोगं वातरोगं शोथं चैव विनाशयेत्। ३९ शंखेसरी। म० शंखासुर, गुलतुरा। शंखेसरी शमीपत्रा सुपुष्पश्च महाद्रुमः ॥ ९९ ॥ 'द्रव्यरत्नाकरे' प्रोक्तो वैद्य-

विद्याविचक्षणैः। **गुणाः।** शंखेसरी तु शूलघ्नी स्वादुष्णा वातनाशनी ॥ ४२०८ ॥ **४० रक्तरंगा।** म० मेहेंदी। रक्तरंगा तु रक्तांगा यवनेष्टा च रंजका। रक्तगर्भा तथा 'द्रव्ये' भिषग्भिः परिकीर्तिता ॥१॥ **गुणाः।** रक्तरंगा दाहहंत्री वातिकृच्छ्लेष्मकुष्ठहृत्। **४१ सर्पदंष्ट्रा। म०** सताप। सर्पदंष्ट्रा गुच्छपत्रा हर्म्यारोहा विषापहा ॥ २ ॥ 'द्रव्यरत्नाकरे' वैद्यैः प्रोच्यते नैव संशयः। **गुणाः।** सर्पदंष्ट्रा तु तिक्तोष्णा कफवातहरा सरा ॥३॥ **४२ रक्तपुष्प। म०** गुलाब। रक्तपुष्पो बृहत्पुष्पो महाकण्टोऽतिमंजुलः। 'द्रव्यरत्नाकरे' चैव संप्रोक्तो भिषजां वरैः॥ ४ ॥ **गुणाः।** रक्तपुष्पो गुलाबस्तु रक्तदोषहरो ध्रुव। वृश्चिकाणां विषघ्नश्च प्रोक्ता 'द्रव्यनिघंटके' ॥ ५ ॥ **४३ अंजीर। म०** अंजीर। अंजीर मृदुल वृत्त रामोदुंबरिकाफलं। 'द्रव्यरत्नाकरे' प्रोक्तं भिषग्विद्योपजीविभिः ॥ ६ ॥ **गुणाः।** अंजीरं शीतलं स्वादु दाहघ्नं रक्तपित्तजित्। **४४ कुकुरुंद। म०** कुकरबंध, कुकुरुंदा। कुकुरुंदस्ताम्रचूडः सूक्ष्मपत्रो मृदुच्छदः ॥ ७ ॥ कुकुंद्रः कुकुरद्रुश्च समोक्तो 'द्रव्यरत्नके'। **गुणाः।** कुकुंदो रक्तदाहघ्नो ज्वरतृष्णाकफापहः ॥ ८॥ **४५ फाफणाकतरु। म०** फोपटें। फाफणाकतरुश्चैव 'द्रव्ये' तु तबलाकृतिः। **गुणाः।** फाफणस्तुवरो ग्राही तत्फलं वातहारकं ॥९॥ **४६ विशल्या। म०** वेहकळ भेद। **व०** भाराटी। विशल्या रक्तकंठा च शल्या खरदलाह्वया। विशल्या तु भवेत्तिक्ता लूताव्रणविनाशिनी ॥ १० ॥ **४७ वनमेथिका। म०** रानमेथी। अहिल्यारण्यमेथी च वास्तिका शैल्यमेथिका। 'द्रव्यरत्नाकरे' चैव संप्रोक्ता वनमेथिका ॥ ११ ॥ **गुणाः।** अहिल्या हयरोगघ्नी ततः स्वल्पगुणा स्मृता। **४८ फोग। म०** फोगू शाक। फोगः प्रसादनः शृंगी सूक्ष्मपुष्पो मरुद्भवा ॥ १२ ॥ 'द्रव्यरत्नाकरे' प्रोक्ता प्राचीनभिषगुत्तमैः। **गुणाः।** फोगः शीतश्च सग्राही रक्तपित्तकफापहः ॥ १३ ॥ **४९ गोलिका। म०** गोलीशाक। गोलिका दुर्भरा पिच्छा पुनर्भूः पिच्छलच्छदा। 'द्रव्यरत्नाकरे' चैव संप्रोक्ता वैद्यनायकैः ॥ १४ ॥ **गुणाः।** गोलिका तु सरा

रूक्षा पित्तहरकफकृद्गुरुः । ५० चिरपोटा । म० चिरपोटाणी । चिरपोटा दीर्घपत्रा कुंतली तिलका ' द्रवे ' ॥ १५ ॥ गुणाः । चिरपोटा हिमा रूक्षा भेदिनी श्वासकासजित् । ५१ तिलपर्णी । म० तिलपर्णी । तिलपर्णी शिरोरंध्री वारिदा करपत्रिका ॥ १६ ॥ 'द्रव्यरत्नाकरे' प्रोक्ता वैद्यविद्याविशारदैः । गुणाः । तिलपर्णी कटूष्णास्यात्सन्निपाताघ्ननाशनी ॥ १७ ॥ ५२ झुंझुरु । म० झुझुरुशाक । झुझुरुश्चैव संप्रोक्तो वनजस्तिक्तशाककः । ' द्रव्यरत्नाकरे ' प्रोक्तः पुरातनभिषग्वरैः ॥१८॥ गुणाः । झुझुरुः किंचिदुष्णा च वातश्वासकफापहा । ५३ वृश्चिकाली । म० आग्या, थोर आग्या । गु० मोटो आगियो । वृश्चिकाली तु दुःस्पर्शा तीक्ष्णाह्वा सूनवल्लभा ॥ १९ ॥'द्रव्यरत्नाकरे' प्रोक्ता प्राचीनभिषजा वरैः । गुणाः । वृश्चिकाली तु बृहती सरोष्णा च त्रिदोषहृत् ॥ २० ॥ अग्निकृद् ' द्रव्यरत्ने ' च पूर्वोक्तैः सह संस्मृता । ५४ शंखालु । म० श्वेत अळू । शंखालुः शंखसकाशो ' द्रव्यरत्नाकरे ' स्मृतः ॥ २१ ॥ गुणाः । शंखालुर्गुरुविष्टंभी बृंहणो बलवीर्यकृत् । ५५ कद्गूदरी । म० लघु बाघांटी । कद्गूदरी दीर्घलता व्याघ्रघंटीदलोपमा ॥ २२ ॥ ' द्रव्यरत्नाकरे ' प्रोक्ता पुरातनचिकित्सकैः । गुणाः । कद्गूदरी च तिक्तोष्णा विषूचिश्लेष्मवातजित् ॥ २३ ॥ ५६ तारसत्त्व । म० मुरदाडशिंग । तारसत्त्वं स्वर्णवर्णं गौर्जरं त्वर्बुदाद्रिज । ' द्रव्यरत्नाकरे ' चैव संप्रोक्त वैद्यनायकैः ॥ २४ ॥ गुणाः । तारसत्त्वं तु वातघ्न ' द्रव्ये ' स्यात्केशरंजनं । ५७ सस्यक । म० सस्यकमणि । सस्यक चैव तार्क्ष्यं च तापिजं नीलमेव च ॥ २५॥ ' द्रव्यरत्नाकरे ' वैद्यैः संप्रोक्तं मर्कताद्रिजं । गुणाः । तापिज तु भवेत्तिक्तं त्वग्दोषोदरशूलहृत् ॥२६॥ विषहृद् 'द्रव्यरत्ने ' च संस्मृत वैद्यनायकैः । ५८ चुंबक । म० लोहचुंबक । चुंबको लोहकार्षः कांतः कानशिला तथा ॥ २७ ॥ ' द्रव्यरत्नाकरे ' चैव संप्रोक्ता शास्त्रवेत्तृभिः । गुणाः । चुंबको लेखनः शीतो विषमेदः समीरहा ॥२८॥ ५९ काच । म० कांच । काचः कृत्रिमरत्नश्च पिंगाशः काच-

भाजनं। 'द्रव्यरत्नाकरे' प्रोक्तं वैद्यविद्याविशारदैः ॥ २९ ॥ गुणाः। कासरत्नु व्रणविद्रावश्चक्षुष्यः शूलहृत्सरः। ६० सेव। म० शेव। मुष्टि-प्रमाणबदरं सेवं सिंचितिकाफलं ॥ ३० ॥ प्रोक्तं 'मदनपाले' तु पुरा-तनभिषग्वरैः। गुणाः। सेवं तु वातपित्तघ्न कफकृद्बृंहणं गुरु ॥ ३१ ॥ वृष्यं तु रसपाके च स्वादु हैमं 'मंद' स्मृतं। 'भावे' शुक्रकरं प्रोक्तं प्राचीनभिषजां वरैः ॥३२॥ ६१ महासिंचितिकाफल। म० सफ-र्जन, सफरचंद। अन्यद्वंगफलं चाम्यं महसिंचितिकाफलं। प्रोक्तं 'मदनपाले' तु वैद्यविद्याविशारदैः॥ ३३ ॥ गुणाः। अपरं सेवगुणकृत् विशेषात् तुवरं हिमं। ६२ अमृतफल। म० अमृतफल। काबूली–नासपात। अमृ-ताह्वं रुचिफलं लघुबिल्वफलाकृति ॥ ३४ ॥ प्रोक्तं 'मदनपाले' तु वैद्यशास्त्रपरायणैः। गुणाः। ततोऽमृतफलं चैव स्वाद्वम्लं गुरु वातहृत् ॥३५॥ रुचिशुक्रकरं प्रोक्तं 'मदने' वैद्यनायकैः। 'भावे' वृष्यं त्रिदो-षघ्नं संप्रोक्तं भिषगुत्तमैः ॥ ३६ ॥ ६३ आलूक। म० सखालूं। आलू-कमल्लकं मल्ल मल्लू रक्तफलं 'मदे'। गुणाः। आलूकं रसतः शीतं स्वाद्वम्लं वातपित्तहृत् ॥ ३७ ॥ ६४ कपित्थपत्री। म० कंवठपत्री। कपित्थपत्री फणिजा कुलजा जीवपत्रिका। प्रोक्ता 'मदनपाले' तु भिषक्शास्त्रपरायणैः ॥ ३८ ॥ गुणाः। कपित्थपत्री तीक्ष्णोष्णा कफमेह-विषापहा। ६५ डिंडिश। म० ढेंडसें। डिंडिशो रोमशफलो मुनि-निर्मित इत्यपि ॥ ३९ ॥ प्रोक्तो 'मदनपाले' तु वैद्यविद्याविशारदैः। गुणाः। डिंडिशो रुचिकृद्भेदी पित्तश्लेष्मापहः स्मृतः ॥ ४० ॥ सुशीतो वातलो रूक्षो मूत्रलश्चाश्मरीहरः। ६६ मरुद्भव। म० माठ। मारिषो बाष्पको मार्ष्यः श्वेतो रक्तस्तु 'भावके' ॥ ४१ ॥ गुणाः। मारिषो मधुरः शीतो विष्टंभी पित्तनुद्गुरुः। वातश्लेष्मकरो रक्तपित्तनुद्विष-मान्निजित् ॥ ४२ ॥ रक्तमार्षो गुरुर्नातिसक्षारो मधुरः स्मृतः। श्लेष्मलः कटुकः पाके स्वल्पदोष उदीरितः ॥ ४३ ॥ ६७ छिक्कनी। म० नाक-शिंकणी। छिक्कनी क्षवकृत्तीक्ष्णा छिक्किका घ्राणदुःखदा। गुणाः।

छिक्रनी कटुका रुच्या तीक्ष्णोष्णा वह्निपित्तकृत् ॥ ४४ ॥ वातरक्तहरी कुष्ठकृमिवातकफापहा। प्रोक्ता 'मदनपाले' तु भिषक्शास्त्रपरायणैः ॥४५॥ ६८ **चंद्रशूर** । म० रानमेथींभेद । चंद्रिका चर्महंत्री च पशुमेहनकारिका । नंदिनी कारवी भद्रा वासपुष्पा सुवासरा ॥ ४६ ॥ प्रोक्ता 'भावप्रकाशे' तु वैद्यविद्याविशारदैः । **गुणाः**। चंद्रशूरं हितं हिक्कावातश्लेष्मातिसारिणां ॥ ४७ ॥ असृग्वातगदद्वेषि बलपुष्टिविवर्द्धनं । ६९ **खसखसफलोद्भूतवल्कल** । म० खसखशीच्या फळांचें बोंड। खसखसफलोद्भूतं वल्कलं 'भावनामके' ॥ ४८ ॥ **गुणाः** । स्यात्खाखसफलोद्भूतं वल्कलं शीतलं लघु । ७० **चणकाम्ल** । म० हरभ-ऱ्याची आंब । चणकाम्लं भिषक्श्रेष्ठैः प्रोक्तं 'भावप्रकाशके' ॥ ४९ ॥ **गुणाः** । चणकाम्लकमत्युष्णं दीपनं दंतहर्षणं । शूलाजीर्णविबंधघ्न 'मदने' परिकीर्तितं ॥ ५० ॥ ७१, **गंधकोकिला तथा गंधमालती** । म० गंधकोकिला व गंधमालती । स्याद्गंधकोकिला 'भावे' तथोक्ता गंधमालती । **गुणाः** । स्निग्धोष्णा कफहृत्तिक्ता सुगंधा गंधकोकिला ॥ ५१ ॥ गंधकोकिलया तुल्या विज्ञेया गंधमालती। ७२ **सुदर्शना** । म० सुदर्शना । सुदर्शना सोमवल्ली चक्रांका मधुपर्णिका ॥ ५२ ॥ **गुणाः** । सुदर्शना तु स्वादूष्णा कफशोफहरा भृवं । रक्तवातहरा प्रोक्ता वैद्यै-'र्भावप्रकाशके' ॥ ५३ ॥ ७३ **मखान्न** । म० मखाणे । गु० मखाणा । *मखान्नं पद्मबीजाभं पानीयफलमेव च । गुणाः । मखान्नं पद्मबीजस्य गुणैस्तुल्यं विनिर्दिशेत्* ॥ ५४ ॥ ७४ **कुमुदिनीबीज** । म० कुमुदिनीचें बीज । कुमुदिन्यास्तु बीजं च तथा कैरविणीफलं । **गुणाः** । ततः कुमुद्बीजं तु स्वादु रूक्षं हिमं गुरु ॥ ५५ ॥ मेहघ्नं श्वासपांडुघ्नं प्रोक्तं 'भावप्रकाशके' । ७५ **यसद** । म० जस्त । गु० जसत । यसदं रंगसदृशं रीतिहेतुस्तु 'भावके' ॥ ५६ ॥ **गुणाः** । यसदं तुवरं तिक्तं शीतलं कफपित्तहृत् । चक्षुष्यं परमं मेहान् पांडुं श्वासं च नाशयेत् ॥ ५७ ॥ ७६ **स्थूलग्रंथि** । म० थोर कोळिंजन । महाभरीवचा

चैव स्थूलग्रंथिस्तथा स्मृता । **गुणा** । महामरीचवचा प्रोक्ता विशेषात्कफनाशनी ॥ ५८ ॥ सुगभा स्याच्चु समोक्ता ततो हीनगुणा 'भवे'। ७७ **द्वीपांतरवचा** । म० चापचीनी । **गुणा** । द्वीपांतरवचा कट्वी तिक्तोष्णा वह्निदीप्तिकृत् ॥५९॥ विबंधाध्मानशूलघ्नी शकृन्मूत्रविशोधनी वातव्याधिमपस्मारमुन्माद तनुवदना ॥ ६० ॥ व्यपोहति विशेषेण फिरंगामयनाशनी । चापचीनी वह्निदीप्ता विबन्धाध्मानशूलहृत ॥ ६१ ॥ 'भावे' चैव तथा प्रोक्ता शकृन्मूत्रविशोधनी । ७८ **कलंबी** । म० कळंबीशाक । कलंबी शतपर्वा च समोक्ता 'भावनामके' ॥ ६२ ॥ **गुणाः** । कलंबी स्तन्यदा प्रोक्ता मधुरा शुक्रकारिणी । ७९ **शुकनासा** । म० शुकनासा । शुकनासा तु तुहिना शाखाट फलिनस्तथा ॥ ६३ ॥ **गुणाः** । शुकनासा महावीर्या पित्तघ्नी च रसायनी । ८० **तमाखु** । म० तमाखू । धूमाख्यो धूम्रवृक्षश्च बृहत्पत्रश्च धूसर ॥६४॥ तमाखुर्गुच्छफलको धूमयंत्रप्रदर्शकः । बहुबीजो बहुफल सूक्ष्मबीजस्तु दीर्घक ॥ ६५ ॥ दीर्घनाटलवर्णं च पुष्प तस्य प्रकीर्तित । **गुणा** । तस्य पत्र तु तीक्ष्णोष्ण कफवातहर पर ॥ ६६ ॥ श्वासकासहर चैव कोष्ठ वातहर तथा । वातानुलोमनकर बस्तिशोधनमूत्रद ॥ ६७ ॥ दंतरुकृशमन चैव कृमियूकादिनाशन । मदपित्तभ्रमकर वमनरेचन स्मृत ॥६८॥ दृष्टिमांद्यकर चैव क्षीणशुक्रकर तथा । तस्यैव धूम्रपानेन विशेषाद् दृष्टिशुक्रहृत् ॥ ६९ ॥ दशांतरप्रभेदेन तीक्ष्ण वातविपित्तल । वमनस्य प्रभावेन वृश्चिकादिविष हरेत् ॥ ७० ॥ रेचनत्वाद्वेग्द्वात श्लेष्माण चाधिगच्छति । वज्राभूमी च चूर्णा जलगुडमिलिता धूम्रपाने प्रशस्ता श्वास कास च निद्राकफपरराकृतान् हति रोगान् प्रसेऱ्या । गुल्मप्लीहाकृमिघ्ना पवनकफरुज हंति काम च शूल हिक्कारोग च मन्दाग्निमपकृमिजनित पीनस न्मयोगात् ॥ ७१ ॥

॥इति अनुक्तौषधिवर्गः समाप्त ॥

ताम्र पक्कं हैमं विषमहृत् । कफपाण्डूदरघ्नं च शूलगुल्महरं कटु ॥ ८ ॥ घनघातसहं स्निग्धं रक्तपत्रामलं मृदु । शुद्धाकरसमुत्पन्नं ताम्रं शुभमसंकरं ॥ ९ ॥ प्रोक्तं 'राजनिघंटे' तु भिषग्विद्याविशारदैः । अर्शोघ्नं कृमिशोफघ्नं कुष्ठप्लीहविनाशनं ॥ १० ॥ मोहदाहभ्रमोत्क्लेशभेदघ्नं तु रसायनं । 'धन्वे' प्रोक्तं तथा 'कैये' लेखनं कासनाशनं ॥ ११ ॥ श्वासक्षयहरं चैव सम्प्रोक्तं भिषगुत्तमैः । वृष्यं सरं पीनसघ्नं ज्वरपित्तहरं 'भावे' ॥ १२ ॥ ४ त्रपु । म० कथील । गु० कलई कथीर । त्रपु त्रपुसमानील वगं च मधुरं हिमं । कुरूप्यं चिप्पटं रगं पूतिगंधं तु 'राजके' ॥ १३ ॥ क्षीरटा कीरटं तीव्रं सिंहलं चित्ररजकं । चिनटं तु गुरुश्रेष्ठं पिच्चटं नपुकं पनं ॥१४॥ कस्तीरं खरटी 'धन्वे' नीलिका नागजीवनं । ततोऽच्चटं सितं शीतं मलिनं तीरकं 'द्रवे' ॥ १५ ॥ तथा तीरं चक्रसंज्ञं मृद्वंगं गुरुपत्रकं । तमरं नागजं नागं स्यादालीनकमापुषं ॥१६॥ क्षुरकं मिश्रकं 'भावे' द्विविधं वगमुच्यते । उत्तमं क्षुरकं तत्र मिश्रकं त्वहितं मतं ॥ १७ ॥ **गुणाः** । त्रपुसं कटु तिक्तं च कषायं लवणं हिमं । सरं मेहकृमिघ्नं च पाण्डुदाहहरं तथा ॥ १८ ॥ रसायनं कांतिकृच्च प्रोक्तं 'राजनिघंटके' । श्वेतं लघु मृदु स्वच्छं स्निग्धमुष्णापहं हिमं ॥१९॥ सूतपनकरं कांतं त्रपु श्रेष्ठं तु 'राजके' । पलितघ्नं विषघ्नं च प्रोक्तं 'धन्वनिघंटके' ॥ २० ॥ 'मदने' श्वासहृत्प्रोक्तं पीपत्पित्तलमित्यपि । 'भावप्रकाशे' चक्षुष्यमुष्णं पुष्टिबलप्रदं ॥ २१ ॥ 'कैये' भेदि लघूष्णं च लेखनं रूक्षमेव हि । वृष्यं कफश्वासहरं वातघ्नं कविभिः स्मृतं ॥ २२ ॥ ५ सीसकं । म० शिसें । गु० शीसु । सीसकं तु जडं सीसं यवनेष्टं भुजंगमं । योगेष्टं नागमुरगं कुवगं परिपिष्टकं ॥ २३ ॥ मृदु कृष्णायसं पद्मं तारशुद्धिकरं स्मृतं । शिरोवृत्तं च वगं स्याच्चीनपिष्टं तु 'राजके' ॥ २४ ॥ तथा बहुमलं चैव भुजगं गुरु पार्वतं । महाकृष्णं धातुमलं विशिष्टं धातुशोधनं ॥ २५ ॥ तथैव नपुकं वभ्रं कुवंगं धातुसंभवं । 'कैये' 'माघ' तथा वभ्रं वप्रं स्यान्नागनामकं ॥ २६ ॥

तथैव चीनवंगं च चीरं कृष्ण निपीतकं। धातुविद् त्रपुपिष्टं च कृष्णरंगं तु कृष्णकं ॥ २७ ॥ उरगः पीतपिष्टं च वर्य सिंदूरकारणं। गंडूपदभवं चैव तमरं यामुनेष्टकं ॥२८॥ स्वर्णारिस्तु तथा प्रोक्त चीनरंगं महाबलं। गुणाः सीसं तु वंगतुल्यं स्याद्रसवीर्यविपाकतः ॥ २९ ॥ उष्णं च कफवातघ्न-मर्शोघ्नं गुरु लेखनं। स्वर्णे नीलं मृदु स्निग्ध निर्मलं च सुगौरव ॥३०॥ रौप्यसशोधन क्षिप्र सीसक च तदुत्तम। प्रोक्तं 'राजनिघंटे' तु तथा 'धन्वंतरौ' स्मृत ॥ ३१ ॥ नागो हि नागसममेव बल ददाति व्याधी-न्विनाशयति चाऽऽयुरलं करोति। मधानधातोरपि वर्धनश्च भुजगराजो हरते च मृत्यु ॥ ३२ ॥ 'द्रव्ये' पाडुहरं प्रोक्त 'मदे' वह्निप्रदी-पन। बलकामप्रदं वैद्यैः संप्रोक्तं नैव सशयः ॥ ३३ ॥ ६ पित्तल। म० पितळ। गु० पीतळ। रीतिः क्षुद्रसुवर्णं च पिंगलं लोहितं तथा। आरकूट पीतकं च ज्ञेय पिंगललोहकं ॥ ३४ ॥ तथा सिंहलकं चैव 'नृपे' पित्तलकं स्मृत। 'धन्वे' तु लोहकं पिंग कपिलोहं सुव-र्णक ॥ ३५ ॥ आर सैंहलक चैव निष्ठुर दारुकंटकं। पीतलोहं 'मद' प्रोक्तं कपिल सुकुमारकं ॥ ३६ ॥ तथा रीती सुलोहं च द्रव्यं स्याद्दारु दारुक। ७ राजरीति। म० सोनपितळ। गु० सोनपीतळ। राजरीतिः काकतुंडी राजपत्नी महेश्वरी ॥ ३७ ॥ ब्राह्मणी ब्रह्मरीतिश्च कपिला पिंगला 'नृपे'। 'धन्वे' राज्ञी तथा 'द्रव्ये' संप्रोक्तं स्वर्णरीतिक ॥ ३८ ॥ तथा विरिञ्चिरीतिश्च ब्रह्मचारी ततः स्मृतः। ब्रह्माणी च तथा प्रोक्ता भिषक्शास्त्रपरायणैः ॥ ३९ ॥ गुणाः। रीतिकायुगुलं तिक्त शीतल लवणं रसे। शोधनं पांडुवातघ्नं कृमिप्लीहातिपित्तजित् ॥ ४० ॥ शुद्दा स्निग्धा मृदुः शीता सुरंगा सूत्रपत्रिणी। हेमोपमा शुभा स्वच्छा जन्या रीतिस्तु 'राजके' ॥ ४१ ॥ रूक्षा सरा विपघ्नी च वलीपलित-नाशनी। आयुर्वृद्धिकरा चैव वलधातुप्रदा 'धने' ॥ ४२ ॥ 'द्रव्ये' तु गुरुमद्भिःप्रोक्ता रक्तपित्तविनाशनी। 'मद' तु कफपित्तघ्नी भिषग्भिः परिकीर्तिता ॥ ४३ ॥ ८ कांस्य। म० कांसें। गु० कासु। कांस्य

सौराष्ट्रिकं घोषं कांसीयं वह्निलोहकं । दीप्तं लोहं घोरपुष्पं दीप्तकं सुमनाह्वयं ॥ ४४ ॥ प्रोक्तं ' राजनिघंटे ' तु वैद्यविद्याविचक्षणैः । ' धन्वंतरौ ' निजं घोषं प्रकाशं कांस्यकं बलं ॥ ४५ ॥ घोषपुष्पं च पिंडांतं शब्दैः पर्यायवाचकैः । ' कैये ' तु कमलं कंसं दीप्तलोहं तु कैराजं ॥ ४६ ॥ तथैव ताम्रत्रपुजं ' द्रव्ये ' प्रोक्तं भिषग्जनैः । ज्ञेयं विद्युत्प्रियं पंचलोहं चैवासुराह्वयं ॥ ४७ ॥ तथा वैद्यैस्तु संप्रोक्तं कंसकं वंगशुल्वजं । गुणाः । कांस्यं पथ्यं तु तिक्तोष्णं चक्षुष्यं कफवातहृत् ॥ ४८ ॥ रुच्यं कषायं रूक्षं च दीपनं लघु पाचनं । श्वेतं दीप्तं मृदु ज्योतिः शब्दाढ्यं स्निग्धनिर्मलं ॥ ४९ ॥ घनाग्निसहसूत्रांगं कांस्यं श्रेष्ठं तु ' राजके ' । दृढदेहकरं ' धन्वे ' कामवृद्धिकरं ध्रुवं ॥ ५० ॥ बलासमं बलकरं सप्रोक्तं वैद्यनायकैः । लेखनं विशदं ' कैये ' कफपित्तविनाशनं ॥ ५१ ॥ ' द्रव्ये ' भेदीति संप्रोक्तं ' मदने ' तु सरं स्मृतं । ९ वट्टलोह । म०, गु० वटलोह । वर्तलोहं वर्नतीक्ष्णं वर्तकं लोहसंकरं ॥ ५२ ॥ नीलिका नीललोहं च लोहजं वट्टलोहकं । ' राजनामनिघंटे ' तु प्रोक्तं वैद्यविचक्षणैः ॥ ५३ ॥ वर्तुलोहं तथा पंचलोहकं ' धन्वनामके ' । त्रिलोहं ' द्रव्यरत्ने ' तु बहुलोहं ' गणे ' स्मृतं ॥ ५४ ॥ गुणाः । वर्तलोहं कटूष्णं च तिक्तं च शिशिरं तथा । मधुरं कफपित्तघ्नं दाहमेहहरं ' नृपे ' ॥ ५५ ॥ १० कांतलोह । गु०, म० कांतलोह । अयस्कांतं कांतलोहं कांतं स्याल्लोहकांतिकं । कांतायसं कृष्णलोहं महालोहं तु ' राजके ' ॥ ५६ ॥ कांताश्मजं तथा वज्रलोहं प्रोक्तं तु ' द्रव्यके ' । भ्रामकं चुंबकं चैव रोमकाख्यं च छेदकं ॥ ५७ ॥ कांतं चतुर्विधं प्रोक्तं ' राजनामनिघंटके ' । भ्रामरं चुंबकं चैव कर्षकं द्रावकं तथा ॥ ५८ ॥ ' धन्वंतरिनिघंटे ' तु रोमकांतं च पंचमं । गुणाः । कांतं तु तीक्ष्णगुणं च रूक्षं पांडुकफापहं ॥ ५९ ॥ शोफघ्नं पित्तहृत्प्रोक्तं ' नृपे ' चैव रसायनं । ' द्रव्ये ' मेदोदरघ्नं च दोषघ्नं दाहनाशनं ॥ ६० ॥ ' भावे ' गुल्मार्शःशूलघ्नं वातघ्नं त्वामनाशनं । भगंदर-

हरं चैव कामलाकुष्ठहृत्तथा ॥ ६१ ॥ यकृत्प्लीहाम्लपित्तघ्नं शिरोरोगहरं, तथा। पुष्टिदं बलदं चैव वीर्यदं देहसिद्धिदं ॥ ६२ ॥ अयस्कांत-विशेषगुणाः। अयस्कांतविशेषा. स्युर्भ्रामकाश्चुंबकादयः। रसायनकराः, सर्वे देहसिद्धिकराः पराः ॥ ६३ ॥ न सूतेन विना कांत न कांतेन विना रसः। सूतकांतसमायोगाद्रसायनमुदीरितं ॥ ६४ ॥ ११ लोह-. किट्ट। म० लोहकीट, मडूर। गु० लोढानु किट्ट। लोहकिट्ट तु किट्टं स्याल्लोहचूर्णमयोमल। लोहज कृष्णचूर्ण च कार्ष्ण्यं लोहमल 'नृपे' ॥ ६५ ॥ लोहोच्छिष्ट च मंडूरमयःकिट्टं मलोद्भवं। लोहोत्थं लोह-निर्यासमयोच्छिष्ट च 'धन्वके' ॥ ६६ ॥ मंडूरक घनोद्भूत 'द्रव्य-रत्ने' त्वयोरजः। तथा 'मदनपाले' च रजः प्रोक्त भिषग्जनैः ॥६७॥ सिंहाण चैव सिंहानं 'कोशे' सिंघाणमेव च। सिंहासनं लोह-विद् च प्रोक्त वैद्यविशारदैः ॥ ६८ ॥ गुणाः लोहकिट्ट तु मधुर कटूष्णं कृमिवातनुत्। पक्तिशूलं मरुच्छूलं मेहगुल्मार्तिशोफनुत्, ॥ ६९ ॥ 'नृपे' प्रोक्तं तथा 'द्रव्ये' कफघ्न प्लीहनाशन। मेदिं पांडूदरघ्नं च 'कैये' स्याल्लोहवत्स्मृतं ॥ ७० ॥ १२ मुंडं। म० लोखंड। गु० लोढुं। मुंडं मुडायसं लोह दृषत्सारं शिलात्मज। अश्मज कृषिलोहं च आरं कृष्णायसं 'नृपे' ॥ ७१ ॥ पारावतं घन धीरं दृढ कूटं मलीमस। श्मसर त्वश्मसार न तथा पारशवं शिवं ॥७२॥ १३ तीक्ष्ण। म० पोलाद, तिखें। गु० गजवेल। तीक्ष्ण शस्त्रायसं. शस्त्र पिंडं पिंडायसं गुरु। आयस निशित तीव्र लोह खड्ग च मुंडज ॥७३॥ अयश्चित्रायस प्रोक्त चीनज 'राजनामके'। कालायसं 'कैयदेवे' व्यंग परशुवधन ॥ ७४ ॥ तथा व्यड धनं चैव 'द्रव्यरत्नाकरे' स्मृतं। चक्र कुष्ठ तथा प्रोक्तं वैद्यगणनिघंटके ॥ ७५ ॥ गुणाः। लोहं रूक्षो-ष्णतिक्तं स्याद्वातपित्तकफापहं। प्रमेहपांडुशूलघ्नं तीक्ष्णं मुंडाधिकं 'नृपे' ॥ ७६ ॥ आयुर्बलप्रदं चैव वीर्यकृत्त्वामवातहृत्। शोभनं कुष्ठहृत्प्रोक्त वलीपलितनाशन ॥ ७७ ॥ वातरक्तहरं शीतं सरं चैव कफापहं।

मधुरं गुरु रूक्षं च चक्षुष्यं लेखनं तथा ॥ ७८ ॥ गरशूलार्शःशोफघ्नं कृमिमेदोहरं ध्रुवं । ग्रहणीघ्नं तथा प्रोक्तमतिसारहरं स्मृतं ॥ ७९ ॥ अर्धसर्वांगवातघ्नं छर्दिश्वासहरं तथा। परिणामाख्यशूलघ्नं 'केये' 'धन्व' तथा स्मृतं ॥ ८० ॥ **समस्ताशोधितधातुदोषाः** । स्वर्णं सम्यगशोधितं श्रमकरं खेदावहं दुःसहं रौप्यं जाठरजाड्यमांद्यजननं ताम्रं वमिभ्रांतिदं । नागं च त्रपु चांगदोषदमयो गुल्मादिदोषप्रदं तीक्ष्णं शूलकरं च कांतिमुदितं कार्श्यामयस्फोटदं ॥ ८१ ॥ विशुद्धिहीनौ यदि मुंडतीक्ष्णौ क्षुधापहौ गौरवगुल्मदायकौ। कांस्यायसं हृद्रुकतापकारकं रीत्यौ च संमोहनशोषदायके ॥८२॥ **१४ मनःशिला** । म० मनशील । गु० मणशल । मनःशिला मनोगुप्ता मनोह्वा कुनटी शिला ॥ ८३ ॥ मनोज्ञा नागजिह्वा च तथा नेपालिका स्मृता । तथा कल्याणिका रोगशिला प्रोक्ता तु 'राजके' ॥ ८४ ॥ 'धन्वे' कला तु गोला च तथा 'कैयनिघंटके'। नेपाली नागपुष्पा च नाली तु करवीरका॥ ८५ ॥ कुला दिव्यौषधी चैव नागमाता मनोह्विका। 'मदे' 'गणे', कवरी संप्रोक्ता वैद्यनायकैः ॥ ८६ ॥ सुरामा त्वरुणा दीप्ता रागसारा च पार्थिवा । तथा वैद्यैस्तु संप्रोक्ता फलटी नागजिह्विका ॥ ८७ ॥ **गुणाः**। मनःशिला कटुः स्निग्धा लेखनी विषभूतहृत् ।भयोन्मादहरा वश्यकारिणी 'राजनामके'॥ ८८॥ भूतविभ्रमं हंति प्रलेपतिलकादिभिः । कफवातामिमांद्यघ्नी कंडुकासक्षयापहा ॥ ८९ ॥ गुरुः सरा तथा श्वासकासघ्नी रक्तदोषहृत् । तथैव विषहृत्प्रोक्ता 'धन्वतरिनिघंटके' ॥ ९० ॥ **१५ सिंदूर** । म० शेंदूर । गु० सिंदूर । सिंदूरं नागरेणुः स्याद्रक्तं सीमंतकं तथा । नागजं नागगर्भं च शोणं वीररजः स्मृतं ॥ ९१ ॥ गणेशभूषणं संध्यारागं शृंगारकं स्मृतं । सौभाग्यमरुणं चैव मंगल्यं 'राजनामके' ॥ ९२ ॥ शृंगारभूषणं श्रीमान्वसंतोत्सवमंडनं। 'धन्वतरिनिघंटे 'तु वसंतोत्सवभूषणं ॥९३॥ चीनपिष्टं तथा श्रीमत् वसंतोद्भवमंडनं । वसंतमंडनं नागरक्तं

स्याद्रक्तवर्णक ॥ ९४ ॥ रक्तरेणुस्तथा प्रोक्त ' कैयदेवनिघटके ' । अस्रेरेणुस्तथा ' द्रव्ये ' ' मदे ' रक्तरज स्मृत ॥ ९५ ॥ रीसोपधातु सप्रोक्त सीसज ' भावनामके ' । सौभाग्यमडन राग गणेशप्रियमेव च ॥ ९६ ॥ तथाविकाप्रिय नागसभव रक्तवालुक । रक्त-चूर्णं तथा वैद्ये सप्रोक्त भालदर्शन ॥ ९७ ॥ **गुणा** । सिंदूर पटुक तिक्तमुष्ण व्रणविरोपण । कुष्ठास्रविषकडूतिविसर्पशमन ' नृप ' ॥ ९८ ॥ तथा ' धन्वनिघटे ' तु शीर्षव्रणहर पर । भग्नसधा-नकृच्चैव विषशोफहर तथा ॥ ९९ ॥ त्रिदोषशमन चैव ' द्रव्यरत्ना-करे ' स्मृत । **सिंदूरलक्षणं** । सुरगोऽग्निसह सूक्ष्म स्निग्ध स्वच्छो गुरुर्मृदु ॥ ४४०० ॥ सुवर्णकरज शुद्ध सिंदूरो मगलप्रद । १६ **भूनाग** । म० गाडूळ, दवणा, काडवे । गु० गाडूळ । भूनाग क्षिति-नागश्च भूजतू रक्तजतुक ॥ १ ॥ क्षितिज क्षितिजतुश्च भूमिजो रक्त-तुडक । प्रोक्तो ' राजनिघटे ' तु बहुनामाह्वयो ध्रुव ॥ २ ॥ **गुणा** । भूनागो वज्रमार स्यान्नानाविज्ञानकारक । रसस्य जारण तूक्त तत्सत्त्व तु रसायन ॥ ३ ॥ ' नृप ' ' द्रव्ये ' तु तत्सत्त्व विघ्न समकीर्तित । १७ **हिंगुल** । म० हिंगूळ । गु० हिंगळो । हिंगुल बर्बर रक्त सुरग सुरगरमृत ॥४॥ रजन दरद म्लेच्छ चित्राग चूर्णपारद । शन्यच मारक चैव मणिराग रसोद्भव ॥ ५ ॥ रजक रसगर्भ च सप्रोक्त 'राजनामक' । मणिरागकर चैव ' धन्व ' चर्मानुरजन ॥ ६ ॥ इगुल तु तथा ' भाव ' ' गणे ' स्यात्पर्वताद्भव । चर्मारक तु हसाघ्रि सप्रोक्त ' द्रव्यरत्नके ' ॥७॥ कपिशीर्ष तथा वैद्ये सप्रोक्त रक्तपारद । दरदस्त्रिविध प्रोक्तश्चर्मार शुकतुडक ॥८॥ हसपादस्तृतीय स्याद्गुणवृद्धचरोत्तर । चर्मार शुक्लवर्ण. स्यात्सपीत शुकतुडक ॥ ९ ॥ जपाकुसुमसकाशो हसपादो महोत्तम । प्रोक्ता ' भावप्रकाश ' तु तथा ' कयनिघटके ' ॥ १० ॥ गैरेय पार्वत चैव कुरुविंद तथा स्मृत । अतिरक्त हसपाद तद्वद्वालुकिन स्मृत ॥११॥ मणिवर्चस्तथा प्रोक्त सैकत क्रौंचलोहित । **गुणा** । हिंगुल

मधुरं गुरु रूक्षं च चक्षुष्यं लेखनं तथा ॥ ७८ ॥ गरशूलार्शःशोफघ्नं कृमिमेदोहरं ध्रुवं । ग्रहणीघ्नं तथा प्रोक्तमतिसारहरं स्मृतं ॥ ७९ ॥ अर्धसर्वांगवातघ्नं छर्दिश्वासहरं तथा। परिणामाख्यशूलघ्नं ' कैये ' ' धन्वे ' तथा स्मृतं ॥ ८० ॥ समस्ताशोधितधातुदोषाः । स्वर्णं सम्यगशोधितं श्रमकरं खेदावहं दुःसहं रौप्यं जाठरजाड्यमांद्यजननं ताम्रं वमिभ्रांतिदं । नागं च त्रपु चांगदोषदमयो गुल्मादिदोषप्रदं तीक्ष्णं शूलकरं च कांतिमुदितं कार्श्यामयस्फोटदं ॥ ८१ ॥ विशुद्धिहीनौ यदि मुंडतीक्ष्णौ क्षुधापहौ गौरवगुल्मदायकौ । कांस्यायसं कुन्दकनापकारकं रीत्यौ च संमोहनशोषदायके ॥८२॥ १४ मनःशिला । म० मनशील । गु० मणशल । मनःशिला मनोगुप्ता मनोह्वा कुनटी शिला ॥ ८३ ॥ मनोज्ञा नागजिह्वा च तथा नेपालिका स्मृता । तथा कल्याणिका रोगशिला प्रोक्ता तु ' राजके ' ॥ ८४ ॥ ' धन्वे ' कला तु गोला च तथा ' कैयनिघंटके ' । नेपाली नागपुष्पा च नाली तु करवीरका ॥ ८५ ॥ कुला दिव्यौषधी चैव नागमाता मनोह्विका । ' मदे ' ' गणे ' कवरी संप्रोक्ता वैद्यनायकैः ॥ ८६ ॥ सुरामा त्वरुणा दीप्ता रसासारा च पार्थिवा । तथा वैद्यैस्तु संप्रोक्ता कुलटी नागजिह्विका ॥ ८७ ॥ गुणाः । मनःशिला कटुः स्निग्धा लेखनी विषभूतहृत् । भयोन्मादहरा वश्यकारिणी ' राजनामके '॥ ८८॥ भूतावेशभयं हंति प्रलेपतिलकादिभिः । कफवातामिमांद्यघ्नी कंडुकासक्षयापहा ॥ ८९ ॥ गुरुः सरा तथा श्वासकासघ्नी रक्तदोषहृत् । तथैव विषहृत्प्रोक्ता ' धन्वंतरिनिघंटके ' ॥ ९० ॥ १५ सिंदूर । म० शेंदूर । गु० सिंदुर । सिंदूरं नागरेणुः स्याद्रक्तं सीमंतकं तथा । नागजं नागगर्भं च शोणं वीररजः स्मृतं ॥ ९१ ॥ गणेशभूषणं संध्यारागं शृंगारकं स्मृतं । सौभाग्यमरुणं चैव मंगल्यं ' राजनामके ' ॥ ९२ ॥ शृंगारभूषणं श्रीमान्वसंतोत्सवमंडनं ।' धन्वंतरिनिघंटे 'तु वसंतोत्सवभूषणं ॥९३॥ चीनपिष्टं तथा श्रीमत् वसंतोद्भवमंडनं । वसंतमंडनं नागरक्तं

स्याद्रक्तवर्णक ॥ ९४ ॥ रक्तरणुस्तथा प्रोक्त ' केयदेवनिघटके ' । अग्नरणुस्तथा ' द्रव्ये ' ' भवे ' रक्तरज स्मृत ॥ ९५ ॥ रीसोपधातु सप्रोक्त सीसज ' भावनामके ' । सौभाग्यमडन राम गणेशभियमेव च ॥ ९६ ॥ तथाविकाप्रिय नागसभव रक्तवालुक । रक्त-चूर्ण तथा वैद्ये सप्रोक्त भालदर्शन ॥ ९७ ॥ **गुणा** । सिंदूर कटुक तिक्तमुष्ण व्रणविरोपण । कुष्ठास्रविषकडूतिविसर्पशमन ' नृप ' ॥ ९८ ॥ तथा ' धन्वनिघटे ' तु शीर्षव्रणहर पर । भग्नस्तथा नडूचैव विषशोफहर तथा ॥ ९९ ॥ त्रिदोषशमन चैव ' द्रव्यरत्ना-करे ' स्मृत । **सिंदूरलक्षणं** । सुरंगोऽग्निसह सूक्ष्म स्निग्ध स्वच्छा गुरुर्मृदु ॥ ४४०० ॥ सुवर्णकरज शुद्ध सिंदूरो मगलप्रद । १६ **भूनाग** । म० गाडूळ, दवणा, काडव । गु० गाडूळ । भुनाग क्षिति-नागश्च भूजतू रक्तजतुक ॥ १ ॥ क्षितिज क्षितिजतुश्च भूमिजो रक्त-तुडक । प्रोक्तो ' राजनिघंटे ' तु वसुसख्याह्वयो भव ॥ २ ॥ **गुणा** । भूनागो वज्रमार स्यान्नानाविज्ञानकारक । रसस्य जारण तूक्त तत्सत्त्व तु रसायन ॥ ३ ॥ ' नृप ' ' द्रव्ये ' तु तत्सत्त्व विषघ्न सप्रकीर्तित । १७ **हिंगुल** । म० हिंगूळ । गु० हिंगळो । हिंगुल बर्बर रक्त सुरग सुरगस्मृत ॥४॥ रजन दरद म्लेच्छ चित्राग चूर्णपारद । अन्यच्च मारक चैव मणिराग रसोद्भव ॥ ५ ॥ रजक रसगर्भ च सप्रोक्त 'राजनामक'। मणिरागकर चैव ' धन्व ' चर्मानुरजन ॥ ६ ॥ हिंगुल तु तथा ' भाव ' ' गण ' स्यात्पर्वताद्भव । रमारक तु हसाग्नि सप्रोक्त ' द्रव्यरत्नके '॥७॥ कपिशीर्षं तथा वैद्यै सप्रोक्त रक्तपारद । दरदस्त्रिविध प्रोक्तश्चर्मार शुवतुडक ॥८॥ हसपादस्तृतीय स्याद्गुणनुदुत्तरोत्तर । चर्मार शुक्लवण स्यात्सपीत शुकतुडक ॥ ९ ॥ जपाकुसुमसकाशो हसपादो महात्तम । प्रोक्ता ' भावप्रकाश ' तु तथा ' कयनिघटके ' ॥ १० ॥ गैरेय पार्वत चैव कुरुविंद तथा स्मृत । अतिरक्त हसपाद तद्वद्बालकिन स्मृत ॥११॥ मणिवर्णस्तथा प्रोक्त मैकत क्रौंचलोहित । **गुणा** । हिंगुल

अमृतोत्पन्नं तुत्थं खर्परिका 'नृपे'। तथा खर्परिकातुत्थं तदर्थेऽमृतसंज्ञकं ॥१६॥ तथैव तुत्थरसकं समोक्तं वैद्यनायकैः। गुणाः। खर्परी कटुका तिक्ता चक्षुष्या च रसायनी ॥ १७ ॥ त्वग्दोषशमनी रुच्या दीप्या पुष्टिविवर्द्धनी। नेत्रनैर्मल्यकारी च सर्वमेहहरा तथा ॥ १८ ॥ कफपित्तक्षयहरा 'नृपे धन्वे' स्मृता बुधैः। ३७ पारद। म० पारा। गु० पारो। पारदो रसराजश्च रसनाथो महारसः ॥ १९ ॥ रसश्चैव महातेजा रसलोहो रसोत्तमः। सूतराट् चपलो जैत्रः शिवबीजं शिवस्तथा ॥ २० ॥ अमृतं च रसेन्द्रः स्याल्लोकेशो दुर्धरः प्रभुः। रुद्रजो हरतेजश्च रसधातुरचिंत्यजः ॥ २१ ॥ खेचरश्चामरः प्रोक्तो देहदो मृत्युनाशनः। स्कंदः स्कंदांशकः सूतो देवो दिव्यरसस्तथा ॥ २२ ॥ प्रोक्तो रसायनश्रेष्ठो यशोदश्च 'नृपे' स्मृतः। हरबीजो रुद्ररेतश्चलश्चैव त्रिलोचनः ॥२३॥ शिवपुत्रो हेमनिधिर्लोकनाथस्तदुत्तरं। ज्ञानं चैव महानीलो 'धन्वन्तरिनिघंटके' ॥ २४ ॥ पारतः शंभुबीजश्च 'द्रव्यरत्ने' प्रकीर्तितः। शीतस्त्रिनेत्रो विख्यातो स्वामी तु रोपणस्तथा ॥ २५ ॥ प्रोक्तो 'मदनपाले' तु 'भावे' चैव शिवाह्वयः। अविनगरस्तथा सिद्धधातुश्च रजःस्वलः ॥ २६ ॥ पारश्च सूतकः प्रोक्तो वैद्यविद्याविचक्षणैः। गुणाः। पारदः षड्रसः प्रोक्तः सर्वरोगविनाशनः ॥ २७ ॥ पञ्चभूतमयश्चैव देहलोहकरस्तथा। मूर्छितो हरते व्याधीन्बद्धः खेचरसिद्धिदः ॥ २८ ॥ सर्वसिद्धिकरो लीनो निरुद्धो देहसिद्धिदः। प्रोक्तो 'राजनिघंटे' तु 'केशे' चैव रसायनः ॥ २९ ॥ चक्षुष्यो योगवाही स्यान्महावृष्यश्च कुष्ठनुत्। ३८ अभ्रक। म० गु० अभ्रक। मृगगर्भं त्वभ्रकं च व्योमाम्बरमतः परं ॥ ३० ॥ ततोऽन्तरिक्षमाकाशं खमनंतस्तदुत्तरं। गौरीबीजं गौरिजेयं च बहुपत्रं 'नृपे' स्मृतं ॥ ३१ ॥ 'धन्वे' तु विमलं शुभ्रं वर्णीतं च पीतकं। निर्गलं पर्वतोद्भूतं तथाभ्रपटलं मतं ॥ ३२ ॥ 'मदने' पटलं स्वच्छं 'कोशे' तु गिरिजामलं। जीमूतं गगनं शून्यं नभः 'कैयनिघंटके' ॥ ३३ ॥

तथैव गिरिजातेजः पार्वतं 'द्रव्यरत्नके' । अन्यत् तु गिरिजाबीजं गिरिज
ममलं घनं ॥ ३४ ॥ घनाह्वयं तथा प्रोक्तं भिषग्विद्याविशारदैः ।
गुणाः । श्वेतं पीतं लोहितं नीलमभ्रं चातुर्विध्यं याति भिन्नक्रियार्हम् ।
श्वेतं तारे काञ्चने पीतरक्तौ नीलं व्याध्याघ्नमभ्रश्च गुणाढ्यम् ॥ ३५ ॥
नीलाभ्र दर्दुरो नामः पिनाको वज्र इत्यपि ॥ ३६ ॥ चतुर्विधं भवे
तस्य परीक्षा कथ्यते क्रमात् ॥ वह्नौ निहितं तनोति नितरां भेकारव
दर्दुरो नाग फूत्कुरुते धनुःस्वनमुपाङ्क्ते पिनाकः किल । वज्रं नैव विकारमेति
तदिमान्यासेवमानः क्रमाद्गुल्मं च प्रमदाश्च कुष्ठिमतगदौ मृत्युं च संजायते
३७ ॥ अभ्रकं त्वमृतं चैव वातपित्तक्षयापह ॥ ३८ ॥ प्रशाकरं त्वरस
कावृष्यमायुष्यदं ध्रुवं । बल्य स्निग्धः रुचिकरमायुष्य कफनाशनं ॥ ३९ ॥
दीपन शीतवीर्यं च योगवाहीति माधुरं । कषायं गुरु कुष्ठघ्नं व्रणमेह-
विषापहं ॥ ४० ॥ प्लीहोदरक्रिमिहरं त्रिदोषघ्नं तु धातुकृत् । धर्षिद्वा-
द्वाजिकरण 'नृप कन्दे च माधके' ॥ ४१ ॥ २१ **स्फाटिकी** । म०
तुरटी । गु० फटकी । स्फटी च स्फाटिकी प्रोक्ता श्वेता शुभ्रा च रङ्गदा ।
दृढरंगा रङ्गदृढा रंगाङ्गा 'राजनामके' ॥ ४२ ॥ स्फाटिका फुल्लतु-
वरी शुभ्रा भूईढरंगदा । 'द्रव्यरत्नाकरे' चैव तथा 'मदनपा-
लके' ॥ ४३ ॥ स्फटिकाख्या तु मृत्स्ना च काक्षी सौराष्ट्रसंभवा ।
क्षीरपाकस्तु सौराष्ट्री 'गणे' च हेमशोधनी ॥ ४४ ॥ तथा संघा
षाढकी चा सुरगा सुरमृत्तिका । रङ्गदा मृत्तिका चैव तुवरी दृढरा-
गदा ॥ ४५ ॥ गुणाः । स्फटी च कटुका स्निग्धा कषाया ज्वरापहा ।
मेहकृच्छ्रनमीशोफदोषघ्नी हृदरगदा ॥ ४६ ॥ शोफहृत्कफपित्तघ्नी
विषव्रणविनाशनी । चित्रकुष्ठविसर्पघ्नी योनिसंकोचकारिणी ॥ ४७ ॥
'नृप' द्रव्ये मदे भावे भिषग्भिः परिकीर्तिता । २२ **क्षुद्रशंख** । म० लहान
शंख । गु० नहानो शंख । शल्लकः क्षुद्रशङ्खश्च शंबूको नखशङ्खकः ॥ ४८ ॥
प्रोक्तो 'राजनिघण्टे' तु 'कैये' शंखनकः स्मृतः । लघुशङ्खस्तथा
प्रोक्तो 'द्रव्यनामनिघण्टके' ॥ ४९ ॥ गुणाः । क्षुल्लकः कटुकरितकः

गु० सोमल । ततो मूषकपाषाणस्त्वाखुपाषाण एव च ॥ ९९ ॥ प्रोक्तो 'राजनिघंटे' तु लोहसंकरकारकः । ५३ माणिक्य । म० माणिक। गु० माण्यक। माणिक्यं शोणरत्नं च रत्नराट् वीररत्नकम्॥ ४६०० ॥ रागद्दक्पद्मरागं च रत्नशोणोपलस्तथा । सौगंधिकं लोहित च कुरुविंद तु शृंगिरम् ॥ १ ॥ तरणी रत्नमाणिक्यं रत्नंनायकमेव च। प्रोक्तं 'राजनिघंटे' तु वैद्यविद्याविचक्षणैः ॥ २ ॥ माणिक सरयक चैव ' केये ' वसुमणिः स्मृतः । कुम्यकं ' द्रव्यरत्ने ' च ' मदने ' शोणरक्तकं ॥३॥ गुणाः । माणिकं मधुरं स्निग्धं वातपित्तव्रणापहं । रसायनकरं चैव प्रोक्तं ' राजनिघण्टके ' ॥ ४ ॥ ५४ मौक्तिक । म० गु० मोती। मुक्ता सौम्या मौक्तिकं च मौक्तिका तदनंतरं । तारा च तारका चैव स्वच्छ तारं च शीतलं ॥ ५ ॥ नीरजं चैव नक्षत्रमिंदुरत्नं तथैव च । लक्ष्मं मुक्ताफलं चैव तद्वद्बिंदुफलं स्मृतं ॥ ६ ॥ मुक्तिका चैव शौक्तेयं तथा मुक्तामणिः स्मृतः । शशिप्रियं तु स्वच्छं च हिमं हैमवतं तथा ॥७॥ सुधा शुभ्रं सुधांशुभ्रं रसं ' राजनिघण्टके ' । शैलेयक शुक्तिमणि- 'धन्वंतरिनिघण्टके ' ॥ ८ ॥ रसोद्भवं ' कैयदवे ' भिषग्भिः परिकीर्तितं । सिंधुजातं शुक्तिजश्च शारदो ' द्रव्यरत्नके ' ॥ ९ ॥ शौक्तिक सौक्तिक प्रोक्तं ' मदने ' परिकीर्तितम्। शुक्तिः शंखो गजश्चैव क्रोडः फणिमत:पर ॥१०॥ मत्स्यो वेणुर्दर्दुरश्च प्रोक्तो ' भावप्रकाशके ' ।गुणाः । मौक्तिकं मधुरं शीतं दृष्टिदोषविषापहं ॥ ११ ॥ राजयक्ष्मविनाशं च क्षीणवीर्य-विवर्धनं । बलपुष्टिवर्धनं च त्रिदोषघ्नं ' नृपे ' स्मृतं ॥ १२ ॥ ५५ प्रवाल । म० पोवळें । गु० परवाळी । उद्धारकमणिश्चैव प्रवालो विद्रु-माशक.। भौमादिपल्लवश्चैव रक्तं रक्ताङ्गं एव च ॥ १३ ॥ प्रोक्तो ' राजनिघंटे ' तु रक्ताकुरलतामणिः । प्रवाल विद्रुमं चैव भूषणार्हं सुव-ल्लिजं ॥ १४ ॥ सामुद्रलं महारक्तं वल्लिपाषाणसंभवं । ' धन्वंतरिनि-घटे ' च संप्रोक्तं भिषजांवरैः ॥ १५ ॥ ' द्रव्यरत्नाकरे ' प्रोक्तं सिंधुवल्लयप्रनामकं । तथा सिंधुलताग्रं तु रक्तवर्णं ' मदे ' स्मृतं ॥१६॥

चन्द्रकोपलः । शीताश्माशशिकान्तश्च चन्द्रिकाद्रव ' राजके ' ॥ ४९ ॥ ' द्रव्यरत्नाकरे ' चैव समोक्तः स्फटिकोपम. । स्फटिक. ' कैयदेवे ' तु ' मदे ' चन्द्रमणिः स्मृत. ॥ ५० ॥ गुणाः । चन्द्रकान्तस्तु शिशिर: स्निग्धः पित्तास्रतापहृत् । ६६ राजावर्त । म० गु० राजावर्तमणि । राजावर्तो नृपावर्तो राजन्योवर्तकस्तथा ॥ ५१ ॥ आवर्तमणिसज्ञश्च ह्यावर्तो ' राजनामके ' । गुणाः । राजावर्त. कटुः स्निग्ध. शिशिर. पित्तहा ' नृपे ' ॥ ५२ ॥ ६७ पेरोज । म० पेरोज । गु० पीरोजो । हरिताश्म तु पेरोज भस्माग हरित द्विज । गुणाः । पेरोज. सुकषाय स्यान्मधुर दीपन परम् ॥ ५३ ॥ चराचरविषघ्न च शूलभूतहर ' नृपे ' ।

**इति सुवर्णादिवर्गः समाप्तः ।**

---

## १२ पानीयवर्गः ।

**१ पानीय । म० । गु० पाणी ।** पानीय जीवन चैव वनममृतमेव च ॥ ५४ ॥ पुष्कराम्भस्तु पाथश्च शम्बर च पयस्तथा । सलिलमुदक चापो वारुण कबन्धनम् ॥ ५५ ॥ जल नीर च कीलाल वारि तु कमलानि च । विशाणशी च भुवनमरातिवहन तथा ॥ ५६ ॥ निम्नग मेघप्रसव क्षीर घनरस रसः । प्रोक्त ' राजनिघण्टे ' तु वासोय सर्वतोमुखम् ॥ ५७ ॥ नील वीर्य च ह्यम्भोम्बु ' धन्वन्तरिनिघण्टके ' । गुणा । पानीय मधुर हैम रुचिद शोषहारकम् ॥ ५८ ॥ तृष्णामोहघातिहर भुक्ताजरय च पाचनम् । निद्रालस्यविषघ्न च श्रान्तातितर्पण स्मृतम् ॥ ५९ ॥ धीकर वीर्यजनन पुष्टिकृ ' राजनामके ' । पित्तव्रणाजीर्णहर छर्दिमूर्च्छागदापहम् ॥ ६० ॥ प्रोक्त ' द्रव्यनिघंटे ' च पुरातनचिकित्सकै. ।

**२ आकाशोदक ।** दिव्योदक खवारि स्यादाकाशसलिल तथा ॥ ६१ ॥ व्योमोदक चान्तरिक्षजल चेत्यभिधान्हयम् । **गुणा ।** दिव्योदक त्रिदोषघ्न मधर पथ्यद परम् ॥ ६२ ॥ रुच्य दीपनद तृष्णाश्रममेहापहारकम् ।

**३ भईवरील पावसाचें पाणी ।** सद्योवृष्टम्बु भूमिस्थ कलुष

दोषदायकम् ॥ ६३ ॥ चिरस्थित लघु स्वच्छ पथ्य स्वादु सुखावह,। ४ समुद्र । यादोनाथसमुद्रसिन्धुजलदाकूपारपाथोधयः पारावारपयोधिसागरसरित्नाथाश्च वारानिधिः । अम्भोराशिसरस्वदम्बुधिनदीनाथाब्धिनित्यार्णवोदन्वद्वारिधिवार्धयः कविरपानाथोऽपि रत्नाकरः ॥ ६४ ॥ गुणा । सागरस्थोदक,विस्र लवण रक्तरोगकृत् ॥ ६५ ॥ उष्ण वैवर्ण्यद चैव दाहपित्तकर ध्रुवम् । त्रिदोषकृद्विपङ्नाथे प्रोक्त ' राजनिघण्टके ' ॥,६६ ॥ ५ नदी । नदी धुनी निर्झरणी तरगिणी सरस्वती शैवलिनी समुद्रगा । कूलकषा कूलवती च निम्नगा शैवालिनी सिन्धुरथाऽऽपगाऽपि च ॥ ६७ ॥ ह्रदिनी समुद्रकान्ता सागरगा ह्लादिनी सरित्कर्षू, । स्रोतस्विनी स्रुनीरा रोधोवक्रा च वाहिनी तटिनी ॥६८॥ गुणा । नादेय सलिल स्वच्छ लघु दीपनपाचनम् । रुच्य तृपापह पथ्य मधुर चेपदुष्णकम् ॥ ६९ ॥ नदीसामान्यमुदक स्वच्छ दीपनपाचनम्।। तृपापह रुचिकर मधुर त्वीषदुष्णक ॥ ७० ॥ ६ समस्तनदी नामानि । गङ्गा भानुसुतारेवा चन्द्रभागा सरस्वती,। मधुमती पिशाचाप शोणो घर्घरकस्तथा ॥,७१ ॥ वेत्रवती क्षौद्रवती पयोष्णी तापी वितस्ता । सरयूश्च सिन्धु. । मही, सुरेन्द्री ह्यथ, गौतमी स्यात्कृष्णा । च । तुङ्गा च कावेरिकान्यो ॥,७२ ॥ इत्येवमाद्याः सरितः समस्ता तडागवापीह्रदकूपकाद्याः । अनेकनूपात्मदेशभेदा लोकाभिधानैः स्वयमूहनीयैः ॥ ७३ ॥ धाराकाराविक तोयमन्तरिक्षमव तथा । परीक्षे च तथा चोक्त ज्ञातव्या जलवेदिभि ॥ ७४ ॥ ७ पृथङ्नद्यादिनामगुणाः । भागीरथी । गङ्गा स्वर्गसरिद्वरा त्रिपथगा मन्दाकिनी जान्हवी पुण्या विष्णुपदी समुद्रसुभगा भागीरथी स्वर्णदी । त्रि-स्रोता सुरदीर्घिका–सुरनदी सिद्धापगा स्वर्धुनी ज्येष्ठा जन्हुसुता, च । भीष्मजननी शुभ्रा च शैलेन्द्रजा ॥ ७५ ॥ गुणाः । शीत स्वादु स्वच्छमत्यन्तरुच्य पथ्य पाक्य पावन पापहारि । तृष्णामोहध्वसन दीपन च प्रज्ञा दत्ते वारि भागीरथीयम्॥७६॥८यमुना। यमुना तपनतनूजा कलिदकन्या यमस्वसा च

कालिंदी । गुणाः । पित्तदाहवमनश्रमापहं स्वादुवातजननं च पाचनम् । ॥ ७७ ॥ वन्हिदीपनकरं च रोचनं यामुनं जलमिदं बलप्रदम् । ९ नर्मदा । रेवा मेकलकन्या सोमसुता नर्मदा च विज्ञेया ॥ ७८ ॥ गुणाः। सलिलं लघु शीतलं सुपथ्यं कुरुते पित्तकफप्रकोपनम् । सकलामयमर्दनं च रुच्यं मधुरं मेकलकन्यकासमुत्थम् ॥ ७९ ॥ १० सरस्वती । सरस्वती प्लक्षसमुद्भवा च सा वाक्प्रदा ब्रह्मसता च भारती । वेदाग्रणीश्चैव पयोष्णिजाता वाणी विशाला कुटिला दृशाव्हा ॥ ८० ॥ गुणाः । सरस्वतीजलं स्वादु पूतं सर्वरुजापहम् । रुच्यं दीपनदं पथ्यं देहकान्तिकरं लघु ॥ ८१ ॥ ११ चन्द्रभागा—काश्मीरे प्रसिद्धा । गुणाः । चान्द्रभागसलिलं सुशीतलं दाहपित्तशमनं च वातदम् १२ मधुमती । काश्मीरे प्रसिद्धा । चन्द्रभागगुणसाम्यदं जलं किंच माधुमतम-ग्निदीपनम् ॥ ८२ ॥ १३ शतद्र्वादिनदीजलानां गुणाः । शुतद्रुर्विपाशायुजः सिन्धुनद्याः सुशीत लघु स्वादु सर्वामयघ्नम् । जलं निर्मलं दीपनं पाचनं च प्रदत्ते बलं बुद्धिमेधायुषं च ॥ ८३ ॥ १४ शोणजलगुणाः । शोणे घर्घरके जलं तु रुचिदं संतापशोषापहं पथ्यं वन्हिकरं तथा च बलदं क्षीणांगपुष्टिप्रदं । १५ वेत्रवती । तत्रान्या दधते चलं समधुरं कान्तिप्रदं पुष्टिदं वृष्यं दीपनपाचनं बलकरं वेत्रावतीपावनी ॥ ८४ ॥ १६ पयोष्णी । पयोष्णीसलिलं रुच्यं पवित्रं पापनाशन । सर्वामयहरं सौख्यं बलकांतिप्रदं लघु ॥ ८५ ॥ १७ वितस्ता । वितस्तासलिलं स्वादु त्रिदोषशमनं लघु । प्रज्ञाबुद्धिप्रदं पथ्यं तापजाड्यहरं परम् ॥८६॥ १८ मही । महीजलं च सुस्वादु बलपित्तकरं लघु। १९ शरयू—उत्तरे प्रसिद्धा पश्चिमगंगा। शरयूसलिलं स्वादु बलपुष्टिप्रदायकं ॥८७॥ २० गोदावरी । गोदावरी गौतमसंभवा सा ब्रह्माद्रिजाताऽथ गौतमी च । गुणाः । पित्तार्तिरक्तार्तिसमीरहारि पथ्यं परं दीपनपाप-

१ वेत्रवती उत्तर हिंदुस्थानांत प्रसिद्ध. २ पयोष्णी विन्ध्याद्रीच्या दक्षिणेस प्रसिद्ध. ३ वितस्ता काश्मीरांत प्रसिद्ध.

हारि ॥ ८८ ॥ कुष्ठादिदुष्टामयदोषहारि गोदावरी वारि तृषानिवारि । २१ कृष्णा । कृष्णानदी कृष्णसमुद्भवा स्यात्सा कृष्णवेणाऽपि च कृष्णगंगा ॥ ८९ ॥ गुणाः । काष्ण्यं जाड्यकरं स्वादु पूत पित्तास्रकोपनम् । कृष्णवेणाजलं स्वच्छं रुच्यं दीपनपाचनम् ॥ ९० ॥ २२घटप्रभा । कृष्णासमगुणं पथ्यं लघु स्वादुकरं तथा । सुकान्तिदं मलापघ्नं प्रोक्तं 'राजनिघण्टके' ॥ ९१ ॥ २३ भीमरथी । मलापहा भीमरथी च घट्टगा यथा च कृष्णाजलसाम्यदा गुणैः । मलापहाघट्टगयोस्तथाऽपि पथ्यं लघु स्वादुतरं सुकांतिदम् ॥ ९२ ॥ २४ तुंगभद्रा । तुंगभद्राजलं स्निग्धं निर्मलं स्वाददं गुरु। कंडुपित्तास्रहृत् प्रायः साम्ये पथ्यकरं 'नृपे' ॥ ९३ ॥ २५ कावेरी । कावेरीसलिलं स्वादु श्रमघ्नं लघु दीपनम् । दद्रुकुष्ठादिदोषघ्नं मेधाबुद्धिरुचिप्रदम् ॥ ९४ ॥ २६ नदीविशेषगुणाः । नदीनामित्थमन्यासां देशदोषादिभेदतः । तत्तद्गुणान्वितं वारि ज्ञातव्यं कृतबुद्धिभिः ॥९५॥ नद्या गुर्वी प्राङ्मुखीवाहिनी या लघ्वी पश्चाद्वाहिनी निश्चयेन । देशे देशे तद्गुणानां विशेषादेषा धत्ते गौरवं लाघवं च ॥९६॥ विन्ध्यात्प्राची याऽप्यवाची प्रतीची या चोदीची स्यान्नदी सा क्रमेण । वाताटोपं श्लेष्मपित्तार्तिलोपं पित्तोद्रेकं पथ्यपाकं च धत्ते ॥ ९७ ॥ हिमवति मलयाचले च विन्ध्ये प्रभवति सह्यगिरौ च या स्रवन्ती । सृजति किल शिरोरुजादिदोषानपनुदतेऽपि च पारियात्रजाता ॥ ९८ ॥ इति देशविशेषान्नदीजलगुणाः । २७ ताम्रपर्णी । ताम्रपर्णीनदीतोयं पवित्रं पुण्यवर्धनं । स्नानपाने हितं प्रोक्तं वैद्ये 'राजनिघंटके' ॥९९॥ २७ कालभेदान्नदीजलगुणभेदः । नद्यः प्रावृषिजास्तु पीनसकफश्वासादिकासंप्रदाः पथ्या वातकफापहा शरदिजा हेमंतजा बुद्धिदाः । संतापं शमयन्ति शं विदधते शैशिर्यवासंतजास्तृष्णादाहवमिभ्रमार्तिशमदा ग्रीष्मे यथा सद्गुणाः ॥ ४७००॥ २८ अनूपदेशजम् । अनूपसलिलं स्वादु स्निग्धं पित्तहरं गुरु । तनोति पामकण्डूतिकफवातज्वरामयान् ॥ १ ॥ २९ जांगलसलिलम् । जांगलं

सलिलं स्वादु त्रिदोषघ्नं रुचिप्रदम्। पथ्यं वाऽयुर्बलवीर्यपुष्टिदं कांतिकृ-तारम्॥ २॥ ३० । साधारणजलगुणविशेषः। साधारणजलं रुच्यं दीपनपाचनं लघु। श्रमतृष्णापहं वातकफमहप्रपुष्टिदं ३ ॥३१॥ विशेषजलं। जात ताम्रमृदस्तदेव सलिलं वातादिदोषप्रद देशाज्जाड्यकर च दुर्जरतरं दोषापहं धूसरम्। वातघ्न तु शिलाशिरोत्थममलं पथ्यं लघु स्वादु च श्रेष्ठं श्याममृदस्त्रिदोषशमन सर्वामयघ्नं पयः॥ ४॥ ३२ ह्रदवारि। म० डोहाचें पाणी। ह्रदवारि वह्निजननं मधुरं कफवात-हारि पथ्य च। ३३ प्रस्रवणजलं। ओहळाचें पाणी। प्रस्रवणजलं स्वच्छ लघु मधुरं रोचनं च दीपनकृत् ॥ ५ ॥ ३४ तडागसलिल। तळ्याचें, पाणी। तडागसलिलं स्वादु कषाय वातदं कियत्। ३५ वापीजलं। विहिरीचें पाणी। वापीजल तु संतापि वातश्लेष्मकरं गुरु ॥ ६ ॥ ३६ कूपोदक। आडाचें पाणी। कफघ्नं कूपपानीयं क्षारं पित्तकरं लघु। ३७ औद्भिदजलं। औद्भिदं पित्तशमनं सलिलं लघु च स्मृतम् ॥ ७ ॥ ३८ केदारसलिलम् पाटाचें पाणी। केदारसलिलं स्वादु विपाके दोषदं गुरु। तदेव बद्धमुक्तं तु विशेषाद्दोषदं भवेत् ॥ ८ ॥ ३९ हंसोदक। नादेय नवमृद्घटेषु निहितं सततमर्कांशुभिर्यामिन्यां च निविष्टमिन्दुकिरणैर्मन्दानिलान्दोलितम्। एलाद्यैः परिवासितं श्रमहरं पित्तोष्णदाहे विषे मूर्च्छारक्तमदात्ययेषु च हितं शंसन्ति हंसोदकम् ॥ ९ ॥ ४० घ्राणपीतोदकगुणाः। यः पानीयं पिबति शिशिर स्वादु नित्यं निशीथे प्रत्यूषे वा पिबति यदि वा घ्राणरन्ध्रेण धीरः। सोऽयं सद्यः पतगपतिना स्पर्धते नेत्र-शक्त्या स्वर्गाचार्यं प्रहसति धिया द्वेष्टि दस्रौ च तन्वा ॥ १० ॥ ४१ दूषितजलम्। विण्मूत्रारुण गीलिकाविषहत तप्तं घनं फेनिलं दन्त-ग्राह्यमनुत्तरं सलवणं शैवालकैः संवृतम्। जंतुव्रातविमिश्रितं गुरुतरं पर्णौघपंकाविलं चन्द्रार्कांशुतिरोहित च न पिबेन्नीरं जडं दोषलम् ॥ ११॥ ४२ शीतांबुपरिवर्जनम्। पार्श्वशूले प्रतिश्याये वातदोषे नवज्वरे।

हिक्काध्मानादिदोषेषु शीताम्बु परिवर्जयेत् ॥ १२॥ ४३ शृतशीतजलं । धातुक्षये रक्तविकारदोषे वान्त्यसंग्रहे विषविभ्रमेषु । जीर्णज्वरे शैथिल-सन्निपाते जल प्रशस्तं शृतशीतल तु ॥ १३ ॥ ४४ तप्तादिजलम् । तप्तं पाथः पादभागेनहीनं प्रोक्त पथ्य वातजातामयघ्नम् । अर्धांशोन नाशयेद्वातपित्तं पादप्रायं तत्तु दोषत्रयघ्नम् ॥ १४ ॥ हेमन्ते पादहीन तु पादार्धोन तु शारदे । प्रावृड्वसते शिशिरे ग्रीष्मे चार्धावशोषितम् ॥१५ कौप प्रस्रवण वाऽपि शिशिरर्तुवसन्तयोः । ग्रीष्मे चौड तु सेवेत दोषद स्यादतोऽन्यथा ॥ १६ ॥ ४५ वेलाजलगुणाः । तप्तं दिवा जाड्यमुपैति नक्त नक्तं च तप्तं तु दिवा गुरु स्यात् । दिवा च नक्तं च नृभिस्तदाम्वतप्त जलं युक्तमतो ग्रहीतुम् ॥१७॥ उष्ण क्वापि क्वापि शीत कवोष्ण क्वापि क्वापि क्वाथशीत च पाथः । इत्थ नृणा पथ्यमेतत्प्रयुक्त कालावस्था देहसंस्थानुबोधात्॥१८॥अपनयति पवनदोषं दलयति कफमाशु नाशयत्यरुचिम्।पाचयति चान्नमनल पुष्णाति निशीथपीतमुष्णाम्भः ॥ १९ ॥ रात्रौ पीतमजीर्ण-दोषशमन शसन्ति सामान्यतः पीत वारि निशावसानसमय सर्वामयध्वंसनम् । भुक्त्वा तूर्ध्वमिद च पुष्टिजनन प्राक्चेदपुष्टिप्रद रुच्य जाठरवह्निपाटवकर पथ्यं च भुक्त्यन्तरे ॥ २० ॥ ४६ जलपानलक्षणम । अत्यम्बुपानान्न विपच्यतेऽन्नमनम्बुपानाच्च स एव दोषः । तस्मान्नरो वह्निविवर्धनार्थं मुहुर्मुहुर्वारि पिबेदभूरि ॥ २१ ॥ ४७ जलभेदाः । जल चातुर्विधं प्राहुरन्तरिक्षोद्भवं बुधाः । धार च कारकं चैव तौषार हैममित्यपि ॥ २२ ॥ अम्बुदप्रोद्भव धार कारं वर्षोपलोद्भवम् । नीहारतोयं तौषार हैमं प्रालेयोद्भवम् ॥ २३ ॥ धार च द्विविध प्रोक्तं गांगसामुद्रभेदतः । तत्र गांगं गुणाढ्य स्याददोषं पाचनं परम् ॥ २४ ॥ यदा स्यादाश्विने मासि सूर्यः स्वातिविशाखयोः । तदाम्बु जलदैर्मुक्तं गांगमुक्तं मनीषिभिः॥२५॥ अन्यदा मृगशीर्षादिनक्षत्रेषु यदम्बुदैः । अभिवृष्टमिद तोयं सामुद्रमिति शब्दितम् ॥ २६॥ धाराधरे वर्षति रौप्यपात्रे विन्यस्य शाल्योदनसिद्धपिण्डे । दधाप्यद्दिव्य निहितं मुहूर्तादविकृतं गांगमथान्यथा स्यात् ॥२७॥

गांगं जलं स्वादु सुशीतलं च रुचिप्रदं पित्तकफापहं च । निर्दोषमच्छं लघु तच्च नित्यं गुणाधिकं व्योम्नि गृहीतमाहुः ॥ २८ ॥ चन्द्रकान्तोद्भवं वारि पित्तघ्नं विमलं लघु । मूर्च्छापित्तास्रदाहेषु हितं कासमदात्यये ॥ २९ ॥ सामुद्रसलिलं शीतं कफवातप्रदं गुरु । चित्राश्वमाश्विने तच्च गुणाढ्यं गांगवद्भवेत् ॥ ३० ॥ पतितं भुवि यत्तोयं गांगं सामुद्रमेव वा । स्वस्वाश्रयवशाद्गच्छेदन्यदन्यद्रसादिकम् ॥ ३१ ॥ आम्लं च लवणं च स्यात्पतितं पार्थिवस्थले । आप्ये तु मधुरं प्रोक्तं कटु तिक्तं च तैजसे ॥ ३२ ॥ कषायं वायवीये स्यादव्यक्तं नाभसे स्मृतम् । तत्र नाभसमेवोक्तमुत्तमं दोषवर्जितम् ॥ ३३ ॥ यत्र चेदाश्विने मासि नैव वर्षति वारिदः । गांगतोयविहीने स्युः काले तत्राविका रुजः ॥ ३४ ॥ क्वचिदुष्णं क्वचिच्छीतं क्वचित्क्वथितशीतलम् । क्वचिद्भेषजसंयुक्तं न क्वचिद्वारि वार्यते ॥ ३५ ॥ इति पानीयप्रकरणम् । इक्षु । ऊस । इक्षुः कर्कटको वंशः कान्तारः सुकुमारकः । असिपत्रो मधुतृणो वृष्यो गुडतृणो ' नृप ' ॥ ३६ ॥ ' धन्वन्तरिनिघण्टे ' तु संप्रोक्तो वेणनिस्वनः । महारसो गुडपत्रो तृणराजस्तवृत्तरम् ॥ ३७ ॥ गण्डीरी मृदुपत्रश्च प्रोक्तो ' मदनपालके ' । श्वेतेक्षु । पांढरा ऊस । श्वेतेक्षुस्तु सितेक्षुः स्यात्काष्ठेक्षुर्वंशपत्रकः ॥ ३८ ॥ सुवंशः पाण्डुरेक्षुश्च काण्डेक्षुर्धवलेक्षुकः । ' नृपे ' ' केये ' भूरिरसो गण्डाकी गुडदारु च ॥ ३९ ॥ गुडशूलोऽतिपत्रश्च शूलश्चैव तथा स्मृतः। वंशेक्षु भिषक्कौ पौरस्तापसप्रिय ' द्रव्यके ' ॥ ४० ॥ गुणाः । सितेक्षुः कठिनो रुच्यो गुरुश्च कफमूत्रकृत् । दीपनः पित्तदाहघ्नो विपाके कोष्णदो ' नृपे ' ॥ ४१ ॥ पुंड्रक । पुंढा ऊस । पुण्ड्रकस्तु रसालः स्याद्रागेक्षुः सुकुमारकः । कर्बुरो मिश्रवर्णश्च नेपालेक्षु ' नृपे ' स्मृतः ॥ ४२ ॥ गुणाः । पुण्ड्रोऽतिमधुरः क्षितिः कफकृत्पित्तनाशनः । दाहश्रमहरो रुच्यो रसे संतर्पणः परः ॥ ४३ ॥ करंकशालि । रसाळ ऊस । तथा परङ्कशालिः स्यादिक्षुवाटीक्षुवाटिका । यावनी चेक्षुयोनिश्च रसाली रसदालिका ॥ ४४ ॥ ' केयदेवनिघण्टे ' तु सम्यक् प्रोक्तेक्षुवालिका

गुणाः। करकशालिर्मधुरः शीतलो रुचिकृन्मृदुः ॥ ४५ ॥ पित्तदाहहरा वृष्यस्तेजोबलविवर्धनः। कृष्णेक्षु। काळा ऊस। कृष्णेक्षुरिक्षरः प्रोक्तः श्यामेक्षुः कोकिलाक्षकः ॥ ४६ ॥ श्यामवंशः श्यामलेक्षुः कोकिलेक्षुश्च 'राजके'। 'धन्वन्तरि निघण्टे' च त्रिक्षुगन्धः प्रकीर्तितः॥४७॥ शतपर्वा ह्रस्वपर्वा वाशिका तदनन्तरम्। कान्तारो दीर्घपर्वा च 'कैये' कोकिलयष्टिका॥४८॥ गुणाः। कृष्णेक्षुर्मधुरो हृद्यः पाके स्वादू रसे कटुः। त्रिदोषघ्नो वीर्यदायी बलदायी 'नृपे' स्मृतः ॥ ४९ ॥ रक्तेक्षु। तांबडा ऊस। रक्तेक्षुः सूक्ष्मपत्रश्च शोणा लोहित उत्कट। मधुरो ह्रस्वमूलश्च लोहितेक्षु 'नृपे' स्मृतः ॥ ५० ॥ 'कैयदेवनिघण्टे' तु दीर्घलोहितयष्टिका। गुणाः। लोहितेक्षुश्च मधुर पाके स्याच्छीतलो मृदुः ॥ ५१ ॥ पित्तदाहहरो वृष्यस्तेजोबलविवर्धनः। इक्षुमूल। इक्षुमूल त्विक्षुनेत्र तथा मोरटक तथा ॥ ५२ ॥ वशनेत्र वशमूल मोरट वशपूरकम्। गुणाः॥ मूलादूर्ध्वं तु मधुरा मध्येऽतिमधुरास्तथा ॥ ५३ ॥ इक्षवस्तेऽग्रभागेषु क्रमाल्लवणनीरसाः। यंत्रपीडितरसगुणाः। यन्त्रपीड्यरसश्चैव श्लेष्मानिलहरो ध्रुवम् ॥ ५४ ॥ वातिहृद्वातजननो जाड्यकृत्पतिश्यायदः। दन्तनिर्पीड्येक्षुरसो रक्तपित्तश्रमापहा ॥ ५५ ॥ शीतलः श्लेष्मदोऽल्पश्च स्निग्धो हृद्यो रुचिप्रदः। मूत्रशुद्धिकरश्चैव कान्तिकृद्बलकारकः ॥ ५६ ॥ बृंहणस्तृप्तिदायी च कृष्णभेदोपवारण। अथेक्षुरसपानीयमिश्रगुणाः। तत्र वेक्षुरसश्चैव पानीयरसमिश्रितः ॥ ५७ ॥ कफानिलकरः प्रोक्तः पूर्वोक्तैः सह 'राजके'। गुड। गूळ। इक्षुसारो गुडश्चैव मधुरो रसपाकजः ॥ ५८ ॥ खण्डजोद्भवजः सिद्धो मोदकी घृतसारकः। शिशुप्रिय-सितादिः स्यादरुणो रसजो 'नृपे' ॥ ५९ ॥ 'धन्वन्तरिनिघण्टे' तु समोक्तो रसपाकजः। स्वादुलोष्टो घनश्चैव 'द्रव्ये' चेक्षुरसोद्भवः ॥ ६० ॥ गुणाः। गुडः सुमधुरः क्षारो गुरूष्णः कफवातनुत्। अहितः पित्तरक्ते च जीर्णश्चैव रसायनः ॥ ६१ ॥ यावनालगुडगुणाः। यावनालगुडःक्षारः कटुर्मधुर एव हि। मकवातहरश्चैव प्रोक्तो 'राजनिघण्टके' ॥६२॥ जीर्णगुडगुणाः।

अथ जीर्णगडः प्रोक्तः पित्तघ्नश्च रसायनः। वातार्तिजिद्रुचिकरो हृद्यस्त्रिदोषवारणः ॥ ६३ ॥ प्रमेहघ्नः स्मादुतरः स्निग्धः श्रमहरो 'नृप'। **मीनाण्डी**। खडीसाखर। शर्करा का तु मीनाण्डी श्वेता मत्स्यण्डिका च सा ॥६४॥ अहिच्छत्रा तु सिकता सिता चैव गुडोद्भवा। **गुणाः**। शर्करा मधुरा शीता पित्तदाहश्रमापहा ॥ ६५ ॥ रक्तदोषहरा भ्रान्तिकृमिकापहरा 'नृप'। **यावनाली**। जोंधळीसाखर ॥६६॥ यावनाली हिमोत्सञ्ज्ञा हिमानी हिमशर्करा। क्षुद्रशर्करिका क्षुद्रा गुडजाजलबिंदुजा ॥ ६७॥ गुणाः। हिमजा शर्करा शैत्या सोष्णा तिक्ताऽतिपिच्छिला। वातघ्नी सारिका रुच्या दाहपित्तास्रदायिनी ॥६८॥ **माध्वी सिता**। मधाची साखर। माध्वी सिता मधूत्पन्ना मधुजा मधुशर्करा। माक्षीकशर्करा चैषा क्षौद्रजा क्षौद्रशर्करा ॥ ६९ ॥ 'नृप' 'द्रव्ये' शुभ्रिका स्यात् माध्वी चैव तथा स्मृता। गुणाः। यद्गुणं यन्मधु प्रोक्तं तद्गुणा तस्य शर्करा ॥ ७० ॥ विशेषाद्बलकृष्य च तर्पणं क्षीणदेहिनाम्। **तवराजशर्करा**। यवासशर्करा त्वन्या सुधा मोदकमोदकः ॥ ७१ ॥ तवराजः खण्डसारः खण्डजा खण्डमोदकः। प्रोक्ता 'राजनिघण्टे' तु 'द्रव्ये' सैव तथा स्मृता ॥ ७२ ॥ यवश्वेता यवोद्भूता यावसक्वाथसंभवा। गुणाः। तवराजोऽतिमधुरं पित्तश्रमतृषापहः ॥ ७३ ॥ वृष्यो विदाहमूर्च्छार्तिभ्रान्तिशान्तिकरः सरः। **पुष्पोद्भवशर्करा**। फूलसाखर। पुष्पोद्भवा पुष्पसिता प्रसूनरससंभवा ॥ ७४ ॥ 'द्रव्ये' 'गणे' पुष्पजा च पुष्पसंस्कृतशर्करा। **साधारणशर्करागुणाः**। दाहं निवारयति तापमपाकरोति तृष्णां नियच्छति निहन्ति च मोहमूर्च्छाम्। श्वासं निवारयति तर्पयतीन्द्रियाणि शीतः सदा सुमधुरः खलु सिद्धखण्डः ॥ ७५ ॥ स्निग्धा पुण्ड्रकशर्करा हितकरी क्षीणे क्षयऽराचके चक्षुष्या बलवर्धिनी सुमधुरा रूक्षा च वंशेक्षुजा। वृष्या तृप्तिबलप्रदा श्रमहरा श्यामेक्षुजा शीतला स्निग्धा कान्तिकरी रसालजनिता रक्तेक्षुजा पित्तजित् ॥ ७६ ॥ मधुः। मध। मधु क्षौद्रं च माक्षीकं माक्षिकं कुसुमासवम्। पुष्पासवं पवित्रं च पित्र्य

पुष्परसाह्वयम् ॥ ७७ ॥ मधुजातय' । मधाच्या जाती । माक्षिक भ्रामर क्षौद्र पौत्तिक छात्रक तथा । अर्घ्यमौद्दालक दालमित्यष्टौ मधुजातयः ॥ ७८ ॥ नानापुष्परसाहारा कपिला वनमक्षिकाः । या. स्थूलास्ताभिरुत्पन्न मधु माक्षिकमुच्यते ॥ ७९ ॥ ये स्निग्धाञ्जनगोलाभाः पुष्पासवपरायणाः । भ्रमरैर्जनित तैस्त भ्रामर मधु भण्यत ॥ ८० ॥ पिंगला मक्षिका' सूक्ष्माः क्षुद्रा इति हि विश्रुताः । ताभिरुत्पादित यत्तु तत्क्षौद्र मधु कथ्यते ॥ ८१ ॥ अनजा मक्षिकाः पिंगा पुत्तिका इति कीर्तिता । तज्जात मधु धीमाद्भिः पौत्तिक समुदाहृतम् ॥ ८२ ॥ छत्राकार तु पटल सरघा' पीतपिंगला । यत्कुर्वन्ति तदुत्पन्न मधु च्छात्रकमीरितम् ॥ ८३ ॥ मक्षिकास्तीक्ष्णतुण्डा यास्तथा षट्पदसन्निभा'। तदुद्भूत यदर्घार्हि तदर्घ्य मधु वर्ण्यते ॥ ८४ ॥ औद्दाला' कपिलाः क्षीणा भ्रमरुद्दलना. स्मृताः । वल्मीकान्तस्तदुत्पन्नमौद्दालकमुदीर्यते ॥८५॥ इन्द्रनीलदलाकाराः सूक्ष्माश्चिन्वन्ति मक्षिकाः । यद्वृक्षकोटरान्तस्थ मध दालमिति स्मृतम् ॥ ८६ ॥ इत्येतस्याष्टधा भेदैरुत्पत्ति कथिता क्रमात् । माक्षिक तैलवर्ण स्याच्छ्वेत भ्रामरमुच्यते ॥ ८७ ॥ क्षौद्र तु कपिलाभास पौत्तिक घृतसन्निभम् । आपीतवर्ण छात्र स्यात्पिंगल चार्घ्यनामकम् ॥८८॥ औद्दाल स्वर्णसदृशमापीत दालमुच्यते । गुणा । माक्षिक मधुर रुक्ष लघु श्वासादिदोषनुत् ॥ ८९ ॥ भ्रामर पिच्छल रुक्ष मधर मुखजाड्यजित् । क्षौद्र तु शीत चक्षुष्य पिच्छल पित्तवातजित् ॥ ९० ॥ पौत्तिक मध रुक्षोष्णमस्रपित्तादिदाहकृत् । चित्रमेहक्रमिघ्न च विद्याच्छात्र गुणोत्तमम् ॥ ९१ ॥ अर्घ्य मध्वतिचक्षुष्य कफपित्तादिदोषहृत् । औद्दालक तु कुष्ठादिदोषघ्न सवसिद्धिदम् ॥ ९२ ॥ दाल कटु कषायाम्लं मधुर पित्तदायि च । नव मधु भवेत्स्थौल्य नातिश्लेष्मकर परम् ॥ ९३ ॥ देहस्थौल्यापह ग्राहि पुराण मधु लेखनम् । पक्व दीपनयम्र मधु विविरुजाजाड्यजिह्वामयादिघ्नम धत्ते च रुच्य बलमतिधृतिद वीर्यवृद्धि विधत्ते । आमं चेटामगुल्मामयपदनरुजापित्त-

दाहास्रदोषमातन्वानं विशोषं जनयति नयति स्वयमङ्गांगवृद्धिम् ॥ १४॥ व्रणशोधनसंधाने व्रणसरोपणाविपु ॥ १५ ॥ साधारण्या मधु हितं तत्तुल्या मधुशर्करा । उष्णैः सहोष्णकाले वा स्वयमुष्णमथापि वा ॥१६॥ अन्न मधु मनुष्याणां विषवच्चापदायकम् । कीटकादियुतमम्लदूषितं यच्च पर्युषितकं मधु स्वतः । कण्टकोटरगतं च मेचकं तच्च गोहजनितं न दोषकृत् ॥ १७ ॥ वृण्डैर्निहस्य यदुपाचमपास्तदश ताद्दग्विधं मधु रसायनयोगयाग्यम् । हिक्कागुदाकुरविशोफकफमणादिदोषापहं भवति दोषदमन्यथा चेत् ॥ १८ ॥ इति मधुप्रकरणम् । मद्य । दारू । मद्य सुरा प्रसन्ना स्यान्मदिरा वारूणी वरा ॥ १९ ॥ मत्ता कादम्बरी शीता चपला कामिनीप्रिया । मदगन्धा च माध्वीकं मधु सन्धानमासवः ॥४८००॥ परिसृताऽमृता वीरा मेधावी मदनी च सा । सुप्रतिभा मनोज्ञा च विपाना मोदिनी तथा ॥ १ ॥ हालाहलगुणाऽरिष्टं सर- कोऽथ मधूलिका । मदोत्कटा महानन्दा प्रोक्ता ' राजनिघण्टके ' ॥२॥ रसा इरा तु मडा च मदकारी च माधवी । जगदोन्मादका हाला बला तु वरुणात्मजा ॥ ३ ॥ ' धन्वे ' ' द्रव्ये ' सुप्रगन्धा शुण्डा च परि- कीर्तिता । हारा सुधा च विख्याता कल्पा गन्धोत्तमा तथा ॥ ४ ॥ देव- सद्याभिषक्श्रेष्ठैः प्रोक्ता ' मदनपालके ' । गुणाः । मद्य सुमधुराम्लं च कफवातनाशनम् ॥ ५ ॥ बलदीप्तिकरं हृद्यं सर्वमेतन्मदावहम् । मद्य तावत्त्रिविधं गौडी माध्वी च पैष्टिका चेति ॥ ६ ॥ अन्यच्च सैन्धिकादि द्रव्यान्तरयोगतो विविधम् । स्याद्धातकीरसगुडादिकृता तु गौडी पुष्पद्रवा वि- मधुसारमयी तु माध्वी । पैष्टी पुनर्विविधधान्यविकारजाता स्यात्ता मदा- धिकतयाऽत्र च पूर्वपूर्वा ॥ ७ ॥ तालादिरसनिर्यासैः सैन्धी हाला सुरां जगुः ॥ ८ ॥ नानाद्रव्यकदम्बेन मद्य कादम्बरं स्मृतम् । सैन्धी कादम्बरी चैव द्विविधं मद्यलक्षणम् ॥ ९ ॥ गौडी तीक्ष्णोष्णमधुरा वातहृत्पित्तका- रिणी । बलकृद्दीपनी पथ्या कान्तिकृत्तर्पणी परा ॥ १० ॥ माध्वी तु

मधुरा हृद्या नात्युष्णा पित्तघ्नातहृत्। पाण्डुकामलगुल्मार्शः प्रमेहशामनी परा ॥ ११ ॥ पैष्टी कटूष्णा तीक्ष्णा स्याद्दीपद्गौडीसमा 'नृपे'। ।

इति पानीयवर्गः।

## १४ क्षीरादिवर्गः।

१ क्षीर १ दूध। क्षीरं पीयूषमूधस्यं दुग्धं स्तन्यं पयोऽमृतम् ॥१२॥ 'नृपे' 'धन्वे' वारिसात्म्यं सौम्यं प्रस्रवणं तथा। समाभव जीवनं च प्रोक्तं स्वादुरसायनम् ॥ १३ ॥ जीवनार्हं च क्षीणार्तं 'द्रव्ये' सजीवनं स्मृतम्। २ दधि। दहीं। क्षीरजं दधि मगस्थं विरलं मस्तु तज्जलं ॥ १४ ॥ तक्रजन्म पयोहेतुर्नवनीतोद्भवं 'धनी'। ३ संतानिका। साय। सतानिका तु सम्प्रोक्ता पयःफेनो 'मदे' ध्रुवम् ॥ १५ ॥ ४ नवनीत। वधिजं नवनीतं च सारो हैयगवीनकम्। प्रोक्तं 'राजनिघण्टे' तु प्राचीनभिषजावरैः ॥ १६ ॥ घृतहेतुर्दधिभवं दधिमण्डोद्भवं तथा। शिशुप्रियं 'धन्वके' च तथैव मथनोद्भवम् ॥ १७ ॥सारगर्भं सारगन्ध 'द्रव्ये' सारभव स्मृतम्। सारजं मथनं प्रोक्तं वैद्यैः 'मदनपालके' ॥ १८ ॥ ५ घृत। तूप। घृतमाज्यं हविः सर्पिः पवित्रं नवनीतजम्। अमृतं चाभिघारश्च होम्यमायुश्च तेजसम् ॥ १९ ॥ प्रोक्तं 'राजनिघण्टे' तु जीवनीयं तु 'धन्वके'। ६ म्रक्षण। घेपडें। म्रक्षणं स्नेहनं स्नेहः स्निग्धता म्रक्ष एव च ॥ २० ॥ अभ्यंगोऽभ्यञ्जनं चैव चोपड तु घृतादिकम्। ७ तक्र। ताक। तक्रं गोरसजं घोलं कालसेयं विलोडितम् ॥ २१ ॥ दण्डाहतमरिष्टं च स्वम्लमौदश्विकं तथा। मथितद्रवसंज्ञं च द्रवो मस्तु 'नृपे' स्मृतम् ॥ २२ ॥ श्वेतं छागपयः सात्म्यं स्मृतं 'धन्वन्तरौ' ध्रुवम्। ८ गोमूत्र। गोमूत्रं गोजलं गोम्भो गोनिष्यन्दश्च गाद्रवः ॥ २३ ॥ 'नृपे' प्रोक्तं तथा 'द्रव्ये' गोम्बु ब्रह्माम्ब एव च। गोपानीयं तथा गोमूत्रसवश्च यवापकः ॥ २४ ॥ गोकिलालं च गोनीरं 'धन्वे' च सुरभीजलम्। ९ गोमय। शेण। गोमयं गोपुरीष

च गोविट्ता गोमलं ' नृपे ' ॥ २५ ॥ १० काञ्जिकम् । कांजी । काञ्जिकं काञ्जिका वीरं कुल्माषाभिषवं तथा । अवन्ति सोमस्त्वावन्ति सोमा धान्याम्ल एव च ॥ २६ ॥ आरनालोऽम्लसारश्च प्रोक्तं ' राजनिघण्टके ' । सौवीरं चैव कुल्माषा तथैवाभिषुतं स्मृतम् ॥ २७ ॥ महाम्लं च सौवीरं सुवीराम्लं तथैव च । यवगोधूमसंभूतं यवोत्थं च यवाम्लम् ॥ २८ ॥ तुषोदकं तुषोदं च प्रोक्तं ' धन्वन्तरौ ' ध्रुवम् । ११ चुक्रम् काञ्जीभेद । चुक्रं सहस्रवेधं च रसाम्लं चुक्रवेधकम् ॥ २९ ॥ शाक्तम्लं भेदनं चण्डं त्वम्लसारं च चुक्रिका । १२ सौवीरक । तुषोदक । सौवीरकं सुवीराम्लं गोधूमसलिलोद्भवम् ॥ ३० ॥ यवाम्लजं यवोत्थं च तुषोत्थं च तुषोदकम् । १३ तण्डुलाम्बु । तांदुळाचें धुवण । तण्डुलोत्थं तण्डुलाम्बु प्रोक्तं ' राजनिघण्टके ' ॥ ३१ ॥ गोदुग्धगुणाः । गव्यं क्षीरं पथ्यमत्यन्तरुच्यं स्वादु स्निग्धं पित्तवातामयघ्नम् । कान्तिप्रज्ञाबुद्धिमेधाङ्गपुष्टिं धत्ते स्पष्टं वीर्यवृद्धिं बिभर्ति ॥ ३२ ॥ माहिषीक्षीर । म्हशीचें दूध । गौल्यं तु माहिषीक्षीरं विपाके शीतलं गुरु । बलपुष्टिप्रदं वृष्यं पित्तदाहास्रनाशनम् ॥ ३३ ॥ अजापयः । शेळीचें दूध । अजानां लघुकायत्वात्कटुतिक्तनिषेवणात् । नात्यम्बुपानाद् व्यायामात्सर्वव्याधिहरं परम् ॥ ३४ ॥ गोदुग्धवीर्यादधिक गुणे च सुक्षीणदेहे च पथ्यमुक्तम् । स्थूलाजदुग्धं कथितं पयोज्ञैः सूक्ष्माजदुग्धं निहन्ति निकृन्तम् ॥ ३५ ॥ आविकं पयः । मेंढीचें दूध । आविकं तु पयः स्निग्धं कफपित्तहरं परम् । स्थौल्यमेदहरं पथ्यं लोमघ्नं गुरु वृद्धिदम् ॥ ३६ ॥ हस्तिनीपयः । हत्तिणीचें दूध । मधुरं हस्तिनीक्षीरं वृष्यं गुरु कषायकम् । स्निग्धं स्थैर्यकरं शीतं चक्षुष्यं बलवर्धनम् ॥ ३७ ॥ अश्वीक्षीरम् । घोडीचें दूध । अश्वीक्षीरं तु रूक्षमाम्लं लवणं दीपनं लघु । देहस्थैर्यकरं बल्यं गौरवं कान्तिकृत्परम् ॥ ३८ ॥ गर्दभीपयः । गाढवीचें दूध । बलकृद्गर्दभीक्षीरं वातश्वासहरं परम् । मधुराम्लरसं रूक्षं दीपनं पाणदं स्मृतम् ॥ ३९ ॥ उष्ट्रीपयः । सांडणीचें दूध । उष्ट्री-

क्षीरं कुष्ठशोफापहं तत्पित्ताशोघ्नं तत्कफाटोपहारि। आनाहार्तिं जन्तुगुल्मोदराख्यं श्वासोच्छ्वासं नाशयत्याशु पीतम्॥४०॥ मानुषीपयः। स्त्रीचें दूध। मधुरं मानुषीक्षीरं कषायं च हिमं लघु। चक्षुष्यं दीपनं पथ्यं पाचनं रोचनं च तत्॥४१॥ सामान्यक्षीरगुणाः। क्षीरं कासश्वासकोपाय सर्वं गुर्वामं स्यात्प्रायशो दोषदायि। तच्चेत्क्वाथावर्तितं पथ्यमुक्तं नारीक्षीरं त्वाममेवाऽमयघ्नम्॥४२॥ उक्तं गव्यादिकं दुग्धं धारोष्णममृतोपमम्। सर्वामयहरं पथ्यं चिरस्थं तु दोषदम्॥४३॥ अन्यच्च। अधानिकं पथ्यतमं शृतोष्णं क्षीरं त्वजानां शृतशीतमाहुः। धाराशृशीतं महिषीपयश्च गव्यं तु धारोष्णमिव प्रशस्तम्॥४४॥ वृष्यं बृंहणमग्निवर्धनकरं पूर्वाह्णपीतं पयो मध्याह्ने बलदायकं रतिकरं कृच्छ्रस्य विच्छेदकम्। बाल्ये वह्निकरं ततो बलकरं वीर्यप्रदं वार्धके रात्रौ क्षीरमनेकदोषशमनं सेव्यं ततः सर्वदा॥४५॥ क्षीरं मुहूर्तत्रितयोषितं यदतःप्रमेतद्विकृतिं प्रयाति। उष्णं तु दोषं कुरुते तदूर्ध्वं विषोपमं स्यादुषितं दशानाम्॥४६॥ जीर्णज्वरे कफे क्षीणे क्षीरं स्यादमृतोपमम्। तदेव तरुणे पीतं विषवद्धन्ति मानुषम्॥४७॥ चतुर्भागं सलिलं निधाय यत्नाद्यदावर्तितमुत्तमं तत्। सर्वामयघ्नं बलपुष्टिकारि वीर्यप्रदं क्षीरमतिप्रशस्तम्॥४८॥ गव्यं पूर्वाह्णकाले स्यादपराह्णे तु माहिषम्। क्षीरं सशर्करं पथ्यं यद्वा स्वाल्पे च सर्वदा॥४९॥ पित्तघ्नं शृतशीतलं कफहरं पक्वं तदुष्णं भवेच्छीतं यत्तु न पाचितं तदखिलं विष्टम्भदोषप्रदम्। धारोष्णं त्वमृतं पयः श्रमहरं निद्राकरं कान्तिदं वृष्यं बृंहणमग्निवर्धनमतिस्वादु त्रिदोषापहम्॥५०॥ क्षीरं न युञ्जीत कदाऽप्यतस्तत्र न चैतल्लवणेन सार्धम्। विदाहिसन्धानकुमाषमुद्गकोशातकीकन्दफलादिकैश्च॥५१॥ तथा च। मत्स्यमांसगुडमुद्गमूलकैः कुष्ठमावहति सेवितं पयः। शाकजाम्बवरसैस्तु सेवितं मारयत्यबुधमाशु सर्पवत्॥५२॥ क्षीरसेवनम्। स्निग्धं शीतं गुरु क्षीरं सर्वकालं न सेवयेत्। दीप्ताग्निं कुरुते मन्दं मन्दाग्निं नष्टमेव च॥५३॥ नित्य

तीव्राग्निना सेव्यं सुपक्वं माहिषं पयः । पुष्णन्ति धातवः सर्वे बलपुष्टिविवर्धनम् ॥ ५४ ॥ क्षीरं गवाजकादेर्मधुरं क्षारं नवप्रसूतानाम् । रूक्षं च पित्तदाहं करोति रक्तामयं कुरुते ॥ ५५ ॥ मधुरं त्रिदोषशमनं क्षीरं मध्यप्रसूतानाम् । लवणं मधुरं क्षीरं विदाहजननं चिरप्रसूतानाम् ॥ ५६ ॥ गुणहीनं निःसारं क्षीरं प्रथमं प्रसूतानाम् । मध्यवयसां रसायनमुक्तमिदं दुर्बलं तु वृद्धानाम् ॥ ५७ ॥ तासां मासत्रयादूर्ध्वं गुर्विणीनां च यत्पयः। तद्वाहि लवणं क्षीरं मधुरं पित्तदोषकृत् ॥ ५८ ॥ वर्णभेदक्षीरादिगुणाः। गवादीनां वर्णभेदाद्गुणा दुग्धादिके पृथक् । केश्चिदुक्तो विशेषाच्च विशेषो देशभेदतः ॥ ५९ ॥ गवां शुभ्राणां वातघ्नं कृष्णानां पित्तनाशनम् । श्लेष्मघ्नं रक्तवर्णानां त्रीन्हन्ति कपिलापयः ॥ ६० ॥ देशविशेषे क्षीरादिगुणाः । देशेषु देशेषु च तेषु तेषु तृणाम्बुनी यादृशदोषयुक्ते । तस्यैव न्यायेन गवादिकानां गुणादि दुग्धादिषु तादृशं मतम् ॥ ६१ ॥ शीतं स्निग्धं गुरु गौल्यं वृष्यं पित्तापहं परम् । ज्ञेया चैवाभिधा तस्य कीलाटं तु पयश्छदः ॥ ६२ ॥ इति क्षीरप्रकरणम् ॥ गोदधि । गाईचें दहीं । दधि गव्यमतिपवित्रं शीतं स्निग्धं च दीपनं बलकृत् । मधुरमरोचकहारि ग्राहि च वातामयघ्नं च ॥ ६३ ॥ महिषीदधि । म्हशीचें दहीं । माहिषं मधुरं स्निग्धं श्लेष्मकृद्रक्तपित्तजित् । बलासवर्धनं वृष्यं श्रमघ्नं शोधनं दधि ॥ ६४ ॥ अजादधि । शेळीचें दहीं । दध्याजं कफवातघ्नं लघूष्णं नेत्रदोषनुत् । दुर्नामश्वासकासघ्नं रुच्यं दीपनपाचनम् ॥ ६५ ॥ आविकं दधि । मेंढीचें दहीं । आविकं दधि सुस्निग्धं कफपित्तकरं गुरु । वाते च रक्तवाते च पथ्यं शोफव्रणापहम् ॥ ६६ ॥ हस्तिनीदधि । हत्तिणीचें दहीं । हस्तिनीदधि कषायलघूष्णं पक्तिशूलशमनं रुचिप्रदम् । दीप्तिदं खलु बलासगदघ्नं वीर्यवर्धनबलप्रदमुक्तम् ॥ ६७ ॥ अश्वीदधि । घोडीचें दहीं । अश्वीदधिस्यान्मधुरं कषायं कफार्तिमूर्च्छामयहारि रूक्षम् । वातान्पदं दीपनकारि नेत्रदोषापहं तत्कथितं पृथिव्याम् ॥ ६८ ॥ गर्दभीदधि । गाढवीचें

दही ।' गर्दभीदधि रूक्षोष्णं लघुदीपनपाचनम् ।' मधुराम्लरसं रुच्यं वातदोषविनाशनम् ॥ ६९' ॥ उष्ट्रीदधि । सांडणीचें दही । औष्ट्रमर्शांसि कुष्ठानि क्रिमिशूलोदराणि च । विहन्ति कटुकं स्वादु किंचिदम्लरसं दधि ॥ ७० ॥ स्त्रीदधि । स्त्रीचें दही । विपाके मधुरं बल्यमम्लं संतर्पणं गुरु । चक्षुष्यं ग्रहदोषघ्नं दधि स्त्रीस्तन्यसंभवम् ॥ ७१ ॥ सामान्यदधिगुणाः । दध्यम्लं गुरु वातदोषशमनं संग्राहि मूत्रापहं बल्यं शोफकरं च रुच्यशमनं वन्हेश्च शान्तिप्रदम् । कासश्वासमुपीनसेषु विषमे शीतज्वरे स्याद्धितं रक्तोद्रेककरं करोति सततं शुक्रस्य वृद्धिं पराम् ॥ ७२ ॥ दधिवर्जम् । लवणमरिचसर्पिः शर्करामुद्गधात्रीकुसुमरसविहीनं नैतदश्नन्ति नित्यम् । न च शरदि वसन्ते नोष्णकाले न रात्रौ न दधि कफविकारे पित्तदोषेऽपि नाद्यात् ॥ ७३ ॥ त्रिकटुकयुतमेतद्राजिकाचूर्णमिश्रं कफहरमनिलघ्नं वन्हिसंधुक्षणं च । तुहिनशिशिरकाले सेवितं चातिपथ्यं रचयति तनुदार्ढ्यं कान्तिमत्त्वं च नृणाम् ॥ ७४ ॥

इति दधिप्रकरणम् ॥

मस्तु । दह्याचें पाणी । उष्णाम्लं रुचिपङ्क्तिं श्रमहरं बल्यं कषायं सरं भुक्तिच्छेदकरं तृषोदरगदप्लीहार्शसां नाशनम् ॥ स्रोतःशुद्धिकरं कफानिलहरं विष्टम्भशूलापहं पाण्डुश्वासविकारगुल्मशमनं मस्तु प्रशस्तं लघु ॥ ४८७५ ॥

तक्र । ताक । तक्रं श्लेष्मसमीरहारि मथितं तल्लेष्मपित्तापहं रुच्यं प्राहुरुदश्विगव्यमधिकं तक्रं त्रिदोषापहम् । मन्दाग्नावरुचौ विदाहविषमश्वासार्तिकासादिषु श्रेष्ठं पथ्यतमं वदन्ति सुधियस्तक्रत्रयं सुत्तमम् ॥७६॥ तक्रं त्रिदोषशमनं रुचिदीपनीयं रुच्यं वमिश्रमहरं क्रमहारि मस्तु । बल्यमदं पवननाशमुदश्विदाख्यं शस्तं कफश्रममरुद्गमनेषु घोलम् ॥ ७७ ॥ अम्लेन वातं मधुरेण पित्तं कफं कषायेण निहन्ति सद्यः । यथा सुराणाममृतं हिताय तथा नराणामिह तक्रमाहुः ॥ ७८ ॥ आमातिसारे च ।

विषूचिकायां वातज्वरे पाण्डुषु कामलेषु। प्रमेहगुल्मोदरवातशूले नित्यं पिबेत्तक्रमरोचके च ॥ ७९ ॥ अपि च। शीतकालेऽग्निमान्द्ये च कफपांड्वामयेषु च। मार्गोपरोधे कुष्ठादिव्याधौ तक्रं प्रशान्तये ॥ ८० ॥ वातोदरी पिबेत्तक्रं पिप्पलीलवणान्वितम्। शर्करामरिचोपेतं स्वादु पित्तोदरी पिबेत् ॥ ८१ ॥ यवानीसैन्धवाजाजीव्योषयुक्तं कफोदरी। सन्निपातोदरी तक्रं त्रिकटुक्षारसैंधवैः ॥ ८२ ॥ तक्रवर्ज्य। तक्रं दद्याच्च क्षते नोष्णकाले नो दौर्बल्ये नो तृषामूर्च्छिते च। नैव भ्रान्तौ नैव पित्तास्रदोषे नो दद्याद्वै सूतिकायां विशेषात् ॥ ८३ ॥ तक्रलक्षण। तक्रं स्नेहान्वितं तुन्दनिद्राजाड्यमदं गुरु। अर्धावशिष्टं सामान्यं विशेषं लघु पथ्यदम् ॥ ८४ ॥

नवनीत। लोणी। शीतं वर्णबलावहं सुमधुरं वृष्यं च पित्तापहं वातघ्नं कफहारकं रुचिकरं सर्वाङ्गशूलापहम्। कासघ्नं श्रमनाशनं सुखकरं कान्तिप्रदं पुष्टिदं चक्षुष्यं नवनीतमुद्धृतनवं गोः सर्वदोषापहम् ॥ ८५ ॥ गाईचें म्हशीचें लोणी। गव्यं च माहिषं चापि नवनीतं नवोद्भवम्। शस्यते बालवृद्धानां बलकृद्धातुवर्धनम् ॥ ८६ ॥ म्हशीचें लोणी। माहिषं नवनीतं तु कषायं मधुरं रसे। शीतं वृष्यप्रदं ग्राहि विषघ्नं तु बलप्रदम् ॥ ८७ ॥ शेळीचें लोणी। लघ्वजाजं तु मधुरं कषायं च त्रिदोषनुत्। चक्षुष्यं दीपनं बल्यं नवनीतं हितं सदा ॥ ८८ ॥ लोमश शेळीचें लोणी। नवनीतं नवोत्थं तु छागजं क्षयकासजित्। बल्यं नेत्रामयघ्नं तु कफघ्नं दीपनं परम् ॥ ८९ ॥ मेंढीचें लोणी। मेंडकं नवनीतं तु क्लिष्टगन्धं च शीतलम्। मेधाहृद्गुरु पुष्टिं च स्थौल्यं मन्दाग्निदीपनम् ॥ ९० ॥ एडकीचें लोणी। आविकं नवनीतं तु विपाके तु हिमं लघु। योनिशूले कफे वाते दुर्नाम्नि च हितं सदा ॥ ९१ ॥ हस्तिणीचें लोणी। हस्तिनीनवनीतं तु कषायं शीतलं लघु। तिक्तं विष्टम्भि जन्तुघ्नं हन्ति पित्तकफक्रिमिन् ॥ ९२ ॥ घोडीचें लोणी। अश्वीयं नवनीतं स्यात्कषायं कफकामजित्। चक्षुष्यं कटुकं चोष्णमीषद्वातापहारकम् ॥ ९३ ॥

गाढवीचें लोणी। गर्दभीनवनीतं तु कषायं कफवातनुत्। बल्यं दीपनदं पाके लघूष्ण मूत्रदोषनुत्॥ ९४॥ उंटिणीचें लोणी। औष्ट्रं तु नवनीतं स्याद्विपाके शीतलं लघु। व्रणकृमिकफास्रघ्नं वातघ्नं विषनाशनम्॥ ९५॥ स्त्रीचे लोणी। नवनीतं तु नारीणां रुच्यं पाके लघु स्मृतम्। चक्षुष्यं सर्वरोगघ्नं दीपनं विषनाशनम्॥९६॥ साधारण नवनीत। शीतं रुच्यनवोद्भूतं सुमधुरं वृष्यं च वातापहं कासघ्नं कृमिनाशनं कफहरं संग्राहि शूलापहम्। बल्यं पुष्टिकरं तृषार्तिशमनं संतापविच्छेदनं चक्षुष्यं -श्रमहारि तर्पणकरं दध्युद्भवं पित्तजित्॥ ९७॥ जुनें लोणी। एकाहाध्युषितं प्रोक्तमुत्तरोत्तरगन्धिदम्। अहृद्यं सर्वरोगाढ्य दधिजं तद्घृतस्मृतम्॥९८॥ गाईचें तूप। धीकान्तिस्मृतिदायकं बलकरं मेधाप्रदं पुष्टिकृद्वातश्लेष्महरं श्रमोपशमनं पित्तापहं हृद्यदम्। वह्नेर्वृद्धिकरं विपाकमधुरं वृष्यं वपुःस्थैर्यदं गव्यं हव्यतमं घृतं बहुगुणं भोग्यं भवेद्भाग्यतः॥ ९९॥ म्हशीचें तूप। सर्पिर्माहिषमुत्तमं धृतिकरं सौख्यप्रदं कान्तिकृद्वातश्लेष्मनिबर्हणं बलकरं वर्णप्रदाने क्षमम्। दुर्नामग्रहणीविकारशमनं मन्दानले दीपनं चक्षुष्यं नवगव्यतः परमिदं हृद्यं मनोहारि च॥ ४१००॥ शेळीचें तूप। आजमाज्यं च चक्षुष्यं दीपनं बलवर्धनम्। कासश्वासकफातंकराजयक्ष्मासु शस्यते॥ १॥ एडकीचें तूप। पाके लघ्वाविकं सर्पिर्न च पित्तप्रकोपनम्। योनिदोषे कफे वाते शोषे कम्पे च तद्धितम्॥ २॥ मेंढीचें तूप। मैडकं घृतमतीवगौरवाद्वर्ज्यमेव सुकुमारदेहिनाम्। बुद्धिपाटवकरं बलावहं सेवितं च कुरुते नृणां वपुः॥ ३॥ हस्तिणीचें तूप। निहन्ति हस्तिनीसर्पिः कफपित्तविषक्रिमीन्। कषायलघु विष्टम्भि तिक्तं चाग्निकरं परम्॥४॥ घोडीचें तूप। अश्वासर्पिस्तु कटुकं मधुरं च कषायकम्। ईषद्दीपनकृन्मूर्च्छाहारि वातालदं गुरु॥ ५॥ उंटिणीचें तूप। घृतमौष्ट्रं तु मधुरं विपाके कटुशीतलम्। कुष्ठकृमिहरं वातकफगुल्मोदरापहम्॥ ६॥ स्त्रीचें तूप। नारीसर्पिस्तु चक्षुष्यं पथ्य सर्वामयापहम्। मन्दाग्निदीपनं रुच्यं पाके लघु विषापहम्॥ ७॥ जुनें तूप। मदाप-

स्मारमूर्च्छादिशिरःकर्णाक्षिजा रुजः । सर्पिः पुराणं जयति व्रणशोधनरोपणम् ॥ ८ ॥ सामान्य तूप । आयुर्वृद्धिं वपुषि दृढतां सौकुमार्यं च कान्तिं नूनं धत्ते स्मृतिबलकरं वान्तिविध्वंसनं च । पथ्यं बाल्ये वयसि तरुणे वार्धके चातिबल्यं नान्यत्किंचित्त्रिजगति नृणां सर्पिषःपथ्यमस्ति॥९॥

॥ इति घृतप्रकरणम् ॥

अथ काञ्जीगुणाः। काञ्जिकं वातशोफघ्नं पित्तज्वरविनाशनम् । दाहमूर्च्छाभ्रमघ्नं च शूलाध्मानविबन्धनुत् ॥ १० ॥ काञ्जिकं तिलतैलं च पलितं वातहारकम् । दाहकं गात्रशैथिल्यं भक्षणाच्च च मर्दनात् ॥ ११॥ काञ्जिभेदचुक्रगुणाः । चुक्रं तिक्ताम्लकं स्वादु कफकासविनाशनम् । नासिकागदवुर्गंधशिरोरोगहरं परम् ॥ १२ ॥ गोधूमयवतुषाम्बुगुणाः । सौवीरकं चाम्लरसं केश्यमस्तकदोषजित् । जराशैथिल्यहरणं बलसंतर्पणं परम् ॥ १३ ॥ ध्रुवणगुणाः ॥ तन्दुलोत्थं च कविभिः कषायं मधुरं लघु ॥ सग्राहि विषविच्छर्दितृड्दाहभ्रमनाशकृत् ॥ १४ ॥ अथ शिवरस ॥ अन्नोदनः शिवरसश्चहान्त्यपुषिते रसे॥ प्रोक्तो 'राजनिघंण्टे' तु प्राचीनभिषजांवरैः ॥ १५ ॥ दीपनं मधुराम्लं तु दाहजिल्लघुतर्पणम् ॥ १६ ॥ गोमूत्रगुणाः ॥ गोमूत्रं कटु तिक्तोष्णं कफवातहरं लघु ॥ पित्तकृद्दीपनं मेध्यं त्वग्दोषघ्नं मतिप्रदम् ॥१७॥ शेळीचें मूत्र ॥ अजामूत्रं कटूष्णं च रूक्षं नाडिविवार्तिजित् ॥ प्लीहोदरकफश्वासगुल्मशोफहरं लघु ॥१८॥ महिषीमूत्र ॥ माहिषं मूत्रमानाहशोफगुल्मेषु दोषनुत् । कटूष्णं कुष्ठकण्डूतिशूलोदररुजापहम् ॥ १९ ॥ मेंढीचें मूत्र । आविकं तिक्तकटुकं मूत्रमुष्णं च कुष्ठजित् । दुर्नामोदरशूलास्रशोफमेहविषापहम् ॥ २० ॥ घोड्याचें मूत्र । अश्वमूत्रं च तिक्तोष्णं तीक्ष्णं च विषदोषजित् । वातप्रकोपशमनं पित्तकारि प्रदीपनम् ॥ २१ ॥ गाढघाचें मूत्र । खरमूत्रं कटूष्णं च क्षारं तीक्ष्णं कफापहम् । महावातापहं भूतकम्पोन्मादहरं परम् ॥ २२ ॥ कन्हेयाचेंमूत्र । औष्ट्रं तु कटुतिक्तोष्णं

लवणं पित्तकोपनम्। बल्यं जठररोगघ्नं वातदोषविनाशनम् ॥२३॥ हस्तिमूत्र। हस्तिमूत्रं तु तिक्तोष्णं लवणं वातभूतनुत्। तिक्तं कषायं शूलघ्नं हिक्काश्वासपरं परम् ॥ २४ ॥ नरमूत्र। मानुषं मूत्रमामघ्नं कृमिव्रणविषांश्वनुत्। तिक्तोष्णं लवण रूक्षं भूतत्वद्दोषवातनुत् ॥ २५ ॥ शूलगुल्मोदरानाह. वातजिच्छर्दनादिषु। मूत्रप्रयोगसाध्येषु गोमूत्रं कल्पयेद्बुधः ॥ २६ ॥ इति मूत्रप्रकरणम्। अथ तैलम्। तैलं स्नेहोत्तमं चैव तिलजं तिलसंभवम्। अभ्यञ्जनं मृड्क्षणं च मर्दनं 'धन्व'नामके ॥२७॥ तैलजाति। तैलेयत्तिलसर्षपादितकुसुमोत्थातसीधान्यजं यच्चैरण्डकरञ्जकैर्गुडफलैर्निम्बाक्षनैर्गुण्डकैः। ज्योतिष्मत्यभयोद्भवं मधुलिका कोशाम्रचित्रीभवं कर्पूरत्रपुसादिजं च सकलं सिध्ये क्रमात्कथ्यते ॥ २८ ॥ तिळाचें तेल ॥ तिलतैलमलं करोति केश्यं मधुरं तिक्तकषायमुष्णतीक्ष्णम् ॥ बलकृत्कफवातजन्तुखर्जूव्रणकण्डूतिहरं च कान्तिदायि ॥ २९ ॥ अथशिरसेल ॥ सर्षपतैलं तिक्तं कटुकोष्णं वातकफविकारघ्नम् ॥ पित्तास्रदोषदं कृमिकुष्ठघ्नं। तिलवच्च चक्षुष्यम् ॥ ३० ॥ कुसुम्भतैल ॥ कुसुम्भतैल कृमिहारि तेजोबलापहं यक्ष्ममलापहं च ॥ त्रिदोषकृत्पुष्टिबलक्षय च करोति कण्डूं विकरोति दृष्टिम् ॥ ३१ ॥ जवसाचें तेल ॥ मधुरं त्वतसीतैलं पिच्छलं चानिलापहम् ॥ मदगंधि कषायं च कफकासापहारकम् ॥ ३२ ॥ धान्यतैल ॥ गोधूमयावनालव्रीहियवाद्यखिलधान्यजं तैलम्। वातकफपित्तशमनं कण्डूकुष्ठादिहारि चक्षुष्यम् ॥ ३३ ॥ एरंडेल ॥ एरण्डतैलं कृमिदोषनाशनं वातामयघ्नं सकलाङ्गशूलहृत्। कुष्ठापहं स्वादु रसायनोत्तमं पित्तप्रकोपं कुरुतेति दीपनम् ॥ ३४ ॥ करंजेल। करञ्जतैलं नयनार्तिनाशनं वातामयध्वंसनमुष्णतीक्ष्णकम् कुष्ठार्तिकण्डूतिविचर्चिकापहं लेपेन नानाविधचर्मदोषनुत् ॥ ३५ ॥ हिंगणाचें तेल। स्निग्धं स्यादिङ्गुदीतैलं मधुरं पित्तनाशनम्। शीतल कान्तिदं बल्यं श्लेष्मद केशवर्धनम् ॥ ३६ ॥ निम्बेल। निम्बतैलं तु नात्युष्णं कृमिकुष्ठकफापहम्। बेहडेल। आक्ष स्वादु

हिमं केश्यं गुरु पित्तानिलार्तिनुत् ॥ ३७ ॥ अथ शेडगेल । शिग्रु-तैलं कटूष्णं च वातजित्कफनाशनम् । त्वग्दोषव्रणकण्डूतिशोफहारि च पिच्छलम् ॥ ३८ ॥ अथ ज्योतिष्मती तैल । कटुज्योतिष्मतीतैलं तिक्तोष्णं वातनाशनम् । पित्तसंतापनं मेधाप्रज्ञाबुद्धिविवर्धनम् ॥ ३९ ॥ सर्वव्याधिहरं पथ्यं नानात्वग्दोषनाशनम् । अथ हिरडेल । शीतं हरी-तकीतैलं कषायं मधुरं कटु ॥ ४० ॥ अथ महुरेल । तीक्ष्णं तु राजिकातैलं ज्ञेयं वातादिदोषनुत् । शिशिरं कण्डूदोषघ्नं केश्यं त्वग्दोष-नाशनम्॥४१॥ अथ अम्बसेल । सरं कोशाम्रजं तैलं कृमिकुष्ठव्रणापहम् । तिक्ताम्लमधुरं बल्यं पथ्यं रोचनपाचनम् ॥४२॥ चिंचरेतैल । यवचिञ्चाभवं तैलं कटुपाके विलेखनम् । कफवातहरं रुच्यं कषायं नातिशीतलम्॥४३॥ अथकर्पूरतेल॥ कर्पूरतैलहिमतैलसितांशुतैलं शीताभ्रतैलतुहिनांशुसुधांशु-तैलम् । कर्पूरतैलकटुकोष्णकफापहारि वातामयघ्नरददार्ढ्यदपित्तकारि ॥ ४४ ॥ अथ कांकडीवालुकादितैल । त्रपुसैर्वारुकचारककूष्माण्ड-प्रभृतिबीजं च पत्तैलम् । तन्मधुरं गुरुशिशिरं केश्यं कफपित्तनाशि कान्तिकरम् ॥४५॥ तैलं न सेवयेद्धीमान्यस्य कस्य च यद्भवेत् । विष-साम्यगुणत्वाच्च योगे प्रोक्तं न वर्जयेत् ॥ ४६॥ उक्तंच । विषस्य तैलस्य न किंचिदन्तरं मृतस्य सुप्तस्य न किंचिदन्तरम् । ऋणस्य दासस्य न किंचिदन्तरं मूर्खस्य काष्ठस्य न किंचिदन्तरम् ॥ ४७ ॥

॥ इति क्षीरादिवर्गः समाप्तः ॥

१४ अथ धान्यवर्गः । तत्र सामान्य साळी । शालयः कमला रुच्या व्रीहिश्रेष्ठा नृपप्रियाः॥ ४८ ॥धान्योत्तमाश्च केदारास्तथैव सुकुमारकाः॥ प्रोक्ता 'राजनिघण्टे' तु वैद्यविद्याविशारदैः॥ शकुनाहितस्तु गरुडो सुगन्धिः कलमस्तथा ॥ ४९ ॥ कलामकश्च पुण्ड्रश्च तथा महिषमस्तकः ॥ पूर्ण-चन्द्रः पुण्डरीकस्तथैव च प्रमोदनः ॥ ५० ॥ पुण्डाण्डकः शीतभीरुः काञ्चनः शकुनाहृतः ॥ पाण्डुगौरो लोमपुष्पो हयनो दीर्घनालकः ॥५१॥ महादूषकसंज्ञश्च दूषको मदनः स्मृतः ॥ अथ राजशालि ॥ शालिर्नृपान्न

राजान्नं राजार्हं दीर्घशूककम् ॥ ५२ ॥ धान्यश्रेष्ठं राजधान्यं राजेष्टं दीर्घकूरकम् ॥ प्रोक्तं राजनिघण्टे तु राजधान्यं च द्रव्यके ॥ ५३ ॥ राजान्नं तु त्रिदोषघ्नं सुस्निग्धं मधुरं लघु ॥ दीपनं बलकृत्पथ्यं कान्तिदं वीर्यवर्द्धनम् ॥ ५४ ॥ राजान्नं त्रिविधं स्वशूकाभिधया ज्ञेयं सितं लोहितं कृष्णश्वेतरसाधिकं च कथितं स्वादोत्तरोत्तर्यतः ॥ त्रैविध्या-दिह तन्दुलाश्च हरिताः श्वेतास्तथा लोहिताः सामान्येन भवन्ति तेऽप्यथगुणैः स्युः पूर्वपूर्वोत्तराः ॥ ५५ ॥ राजान्नंआंधेप्रसिद्धः॥ षष्टिकः षष्टिशालिः स्यात्षष्टिजः स्निग्धतण्डुलः । षष्टिवासरजश्चैव तथा मास-द्वयोद्भवः ॥ ५६ ॥ प्रोक्तो राजनिघण्टे तु पुरातनभिषग्वरैः । महाव्रीहिः कृष्णव्रीहिर्यवकः पाक एव च ॥ ५७ ॥ रक्तसारमुखो यश्च प्रोक्तो धन्वन्तरौ ध्रुवम् । द्रव्यरत्नाकरे प्रोक्तं अन्हवो भिषजांवरैः ॥५८ ॥ गौरो नीलः षष्टिकोयं द्विधा स्यादाद्यो रुच्यः शीतलो दोषहारी । बल्यः पथ्यो दीपनो वीर्यवृद्धिं दत्ते चास्मार्ङ्किचिदूनो द्वितीयः ॥५९॥ काळीसाळ ॥ कृष्णशालिः कालशालिः श्यामशालिः सितेतरः । प्रोक्तो राजनिघन्टे तु भिषक्क्रियापरायणैः ॥ ६० ॥ शाबरश्चैव न्हस्वश्च हतको धन्वनामके । कृष्णशालिः त्रिदोषघ्नो मधुरः पुष्टिवर्धनः ॥६१॥ वर्णकान्तिकरो बल्यो दाहजिद्वीर्यवृद्धिकृत् । अथ रक्तशाली । रक्तशालिस्ताम्रशालिः शोण-शालिश्च लोहितः ॥ ६२ ॥ प्रोक्तो राजनिघण्टे च प्राचीनभिषगुत्तमैः । वृन्दारको महाशालिः सुगन्धः प्रसवस्तथा ॥ ६३ ॥ मुष्टिको भिषजां श्रेष्ठैः प्रोक्तं धन्वन्तरौ ध्रुवम् । रक्तशालिः सुमधुरो लघुः स्निग्धो बला-वहः ॥ ६४ ॥ रुचिकृद्दीपनः पथ्यो मुखजाड्यरुजापहः । सर्वामयहरो रुच्यः पित्तदाहानिलास्रजित् ॥६५॥ अथ निःशूकशाली ॥ मुण्डशालि-र्मुण्डनको निःशूको यवशूकजः । प्रोक्ता राजनिघण्टे तु भिषग्वि-द्योपजीविभिः ॥ ६६ ॥ मुण्डशालिस्त्रिदोषघ्नो मधुराम्लो बलप्रदः । **अथ थोरसाळी** । स्थूलशालिर्महाशालिः स्थूलांगःस्थूलतन्दुलः ॥६७॥ एवगुणादयशालाश्च नामान्युक्तानि सूरिभिः । प्रोक्तो 'राजनिघण्टे' तु

हिमं केश्यं गुरु पित्तानिलार्तिनुत् ॥ ३७ ॥ अथ शेडगेल । शिग्रुतैलं कटूष्णं च वातजित्कफनाशनम् । त्वग्दोषव्रणकण्डूतिशोफहारि च पिच्छलम् ॥ ३८ ॥ अथ ज्योतिष्मती तैल । कटुज्योतिष्मतीतैलं तिक्तोष्णं वातनाशनम् । पित्तसंतापनं मेधाप्रज्ञाबुद्धिविवर्धनम् ॥ ३९ ॥ सर्वव्याधिहरं पथ्यं नानात्वग्दोषनाशनम् । अथ हिरडेल । शीतं हरीतकीतैलं कषायं मधुरं कटु ॥ ४० ॥ अथ महुरेल । तीक्ष्णं तु राजिकातैलं ज्ञेयं वातादिदोषनुत् । शिशिरं कण्डुदोषघ्नं केश्यं त्वग्दोषनाशनम् ॥४१॥ अथ अम्ब्रसेल । सरं कोशाम्रज तैलं कृमिकुष्ठव्रणापहम् । तिक्ताम्लमधुरं बल्यं पथ्यं रोचनपाचनम् ॥४२॥ चिंचारेतैल । यवचिञ्चीभव तैलं कटुपाके विलेखनम् । कफवातहर रुच्यं कषायं नातिशीतलम् ॥४३॥ अथकर्पूरतैल ॥ कर्पूरतैलहिमतैलसितांशुतैलं शीताभ्रतैलतुहिनांशुसुधांशुतैलम् । कर्पूरतैलकटुकोष्णकफापहारि वातामयघ्नरददार्ढ्यदपित्तकारि ॥ ४४ ॥ अथ कांकडीवालुकादितैल । त्रपुसर्वारुकचारककूष्माण्डप्रभृतिबीजं च यत्तैलम् । तन्मधुरं गुरुशिशिरं केश्यं कफपित्तनाशि कान्तिकरम् ॥४५ ॥ तैलं न सेवयेद्धीमान्यस्य कस्य च यद्भवेत् । विषसाम्यगुणत्वाच्च योगे प्रोक्तं न वर्जयेत् ॥ ४६॥ उक्तंच । विषस्य तैलस्य न किंचिदन्तरं मृतस्य सुप्तस्य न किंचिदन्तरम् । व्रणस्य वांसस्य न किंचिदन्तरं मूर्खस्य काष्ठस्य न किंचिदन्तरम् ॥ ४७ ॥

॥ इति क्षीरादिवर्गः समाप्तः ॥

१४ अथ धान्यवर्गः । तत्र सामान्य साळी । शालयः कमला रुच्या व्रीहिश्रेष्ठा नृपप्रियाः ॥ ४८ ॥ धान्योत्तमाश्च केदारास्तथैव सुकुमारकाः ॥ प्रोक्ता 'राजनिघण्टे' तु वैद्यविद्याविशारदैः ॥ शकुनाहितस्तु गरुडो सुगन्धिः कलमस्तथा ॥ ४९ ॥ कालामकश्च पुण्ड्रश्च तथा महिषमस्तकः ॥ पूर्णचन्द्रः पुण्डरीकस्तथैव च प्रमोदनः ॥ ५० ॥ पुष्पाण्डकः शीतभीरुः काञ्चनः शकुनाहृतः ॥ पाण्डुगौरो लोमपुष्पो हयनो दीर्घनालकः ॥५१॥ महाद्रूपकसंज्ञश्च दूषको मदने स्मृतः ॥ अथ राजशालि ॥ शालिर्नृपश्च

राजान्नं राजार्हं दीर्घशूककम् ॥ ५२ ॥ धान्यश्रेष्ठं राजधान्यं राजेष्टं दीर्घकूरकम् ॥ प्रोक्तं राजनिघण्टे तु गजधान्यं च द्व्यके ॥ ५३ ॥ राजान्नं तु त्रिदोषघ्नं सुस्निग्धं मधुरं लघु ॥ दीपनं बलकृत्पथ्यं कान्तिदं वीर्यवर्द्धनम् ॥ ५४ ॥ राजान्नं त्रिविधं स्वशूकाभिधया ज्ञेयं सितं लोहितं कृष्णश्वेतरसाधिकं च कथितं स्वादोत्तरोत्तरतः ॥ त्रैविध्या-दिह तन्दुलाश्च हरिताः श्वेतास्तथा लोहिताः सामान्येन भवन्ति तेऽप्यथगुणैः स्युः पूर्वपूर्वोत्तराः ॥ ५५ ॥ राजान्नंआम्बेमसिद्धः॥ षष्टिकः षष्टिशालिः स्यात्षष्टिजः स्निग्धतण्डुलः । षष्टिवासरजश्चैव तथा मास-द्वयोद्भवः ॥ ५६ ॥ प्रोक्तो राजनिघण्टे तु पुरातनभिषग्वरैः । महाव्रीहिः कृष्णव्रीहिर्यवकः पाक एव च ॥ ५७ ॥ रक्तसारमुखो यश्च प्रोक्तो धन्वन्तरौ ध्रुवम् । ग्रन्थरत्नाकरे प्रोक्तं अन्हवो भिषजांवरैः ॥ ५८ ॥ श्वेतो नीलः षष्टिकोयं द्विधा स्यादाद्यो रुच्यः शीतलो दोषहारी । बल्यः स्यात् दीपनो वीर्यवृद्धिं दत्ते चास्मात्किंचिदूनो द्वितीयः ॥ ५९ ॥ कालीसाळ ॥ कृष्णशालिः कालशालिः श्यामशालिः सितेतरः । प्रोक्तो राजनिघण्टे तु भिषक्विद्यापरायणे ॥ ६० ॥ शाबरश्चैव ह्रस्वश्च हतको धन्वन्तरौ ध्रुवम् । कृष्णशालिः त्रिदोषघ्नो मधुरः पुष्टिवर्धनः ॥ ६१ ॥ वर्णकान्तिकरो बल्यो दाहजिद्वीर्यवृद्धिकृत् । **अथ रक्तशाली ।** रक्तशालिस्ताम्रशालिः शोण-शालिश्च लोहितः ॥ ६२ ॥ प्रोक्तो राजनिघण्टे च प्राचीनैर्भिषगुत्तमैः । वृन्दारको महाशालिः सुगन्धः प्रसवस्तथा ॥ ६३ ॥ सुश्रुते विख्यातं श्रेष्ठः प्रोक्त धन्वन्तरौ ध्रुवम् । रक्तशालिः सुमधुरो लघुः स्निग्धो मला-वहः ॥ ६४ ॥ रुचिकृद्दीपनः पथ्यो मुखजाड्यरुजापहः । बलमांसकरो रुच्यः पित्तदाहानिलास्रजित् ॥ ६५ ॥ अथ निःशूकशाली ॥ मुण्डशालि-मुण्डनको निःशूको यवशूकजः । प्रोक्ता राजनिघण्टे तु भिषग्भि-र्दोषवर्जितैः ॥ ६६ ॥ मुण्डशालिस्त्रिदोषघ्नो मधुरो लघुः । **अथ थोरसाळी ।** स्थूलशालिर्महाशालिः स्थूलांशःस्थूलशालिः ॥ ६७ ॥ एवगुणाढ्यशालाश्च नामान्यूह्यानि सुरिभिः । प्रोक्तो धन्वन्तरौ तु

हिमं केश्यं गुरु पित्तानिलार्तिनुत् ॥ ३७ ॥ अथ शेडगेल । शिग्रु-
तैलं कटूष्णं च वातजित्कफनाशनम् । त्वग्दोषव्रणकण्डूतिशोफहारि च
पिच्छलम् ॥ ३८ ॥ अथ ज्योतिष्मती तैल । कटुज्योतिष्मतीतैलं
तिक्तोष्णं वातनाशनम् । पित्तसंतापनं मेधाप्रज्ञावृद्धिविवर्धनम् ॥ ३९ ॥
सर्वव्याधिहरं पथ्यं नानात्वग्दोषनाशनम् । अथ हिरडेल । शीतं हरी-
तकीतैलं कषायं मधुरं कटु ॥ ४० ॥ अथ मद्दुरेल । तीक्ष्णं तु
राजिकातैलं ज्ञेयं वातादिदोषनुत् । शिशिरं कण्डुदोषघ्नं केश्यं त्वग्दोष-
नाशनम्॥४१॥ अथ अम्बसेल । सरं कोशाम्रज तैलं कृमिकुष्ठव्रणापहम् ।
तिक्ताम्लमधुरं बल्यं पथ्यं रोचनपाचनम् ॥४२॥ चिंचोरतैल । धवाचिञ्चाभवं
तैलं कटुपाके विलेखनम् । कफवातहर रुच्यं कषायं नातिशीतलम्॥४३॥
अथकर्पूरतैल॥ कर्पूरतैलहिमतैलसितांशुतैलं शीताभ्रतैलतुहिनांशुसुधांशु-
तैलम् । कर्पूरतैलकटुकोष्णकफापहारि वातामयघ्नरददार्ढ्यदपित्तकारि
॥ ४४ ॥ अथ कांकडीवालुकादितैल । त्रपुसेर्वारुकचारफकूष्माण्ड-
प्रभृतिबीजं च पत्तैलम् । तन्मधुरं गुरुशिशिरं केश्यं कफापित्तनाशि
कान्तिकरम् ॥४५ ॥ तैलं न सेवयेद्धीमान्यस्य कस्य च यद्भवेत् । विष-
साम्यगुणत्वाच्च योगे प्रोक्तं न वर्जयेत् ॥ ४६॥ उक्तंच । विषस्य तैलस्य
न किंचिदन्तरं मृतस्य सुप्तस्य न किंचिदन्तरम् । ऋणस्य दासस्य न
किंचिदन्तरं मूर्खस्य काष्ठस्य न किंचिदन्तरम् ॥ ४७ ॥

॥ इति क्षीरादिवर्गः समाप्तः ॥

१४ अथ धान्यवर्गः । तत्र सामान्य साळी । शालयः कमला रुच्या
मेहिश्रेष्ठा नृपप्रियाः॥ ४८ ॥धान्योत्तमाश्च कैदारास्तथैव सुकुमारकाः॥
प्रोक्ता 'राजनिघण्ट' तु वैद्यविद्याविशारदैः॥ शकुनाहितस्तु गरुडो सुगन्धिः
कलमस्तथा ॥ ४९ ॥ कलामकश्च पुण्ड्रश्च तथा महिषमस्तकः ॥ पूर्ण-
चन्द्रः पुण्डरीकस्तथैव च प्रमोदनः ॥ ५० ॥ पुष्पाण्डकः शीतभीरुः
काञ्चनः शकुनाहृतः ॥ पाण्डुगौरो लोध्रपुष्पो हयनो दीर्घनालकः ॥५१॥
महादूषकसंज्ञश्च दूषको मदनं स्मृतः ॥ अथ राजशालि ॥ शालिर्नृपान्न

राजान्नं राजार्हं दीर्घशूककम् ॥ ५२ ॥ धान्यश्रेष्ठं राजधान्यं राजेष्टं दीर्घकूरकम् ॥ प्रोक्तं राजनिघण्टे तु गजधान्यं च द्रव्यके ॥ ५३ ॥ राजान्नं तु त्रिदोषघ्नं सुस्निग्धं मधुरं लघु ॥ दीपनं बलकृत्पथ्यं कान्तिदं वीर्यवर्द्धनम् ॥ ५४ ॥ राजान्नं त्रिविधं स्वशूकाभिधया ज्ञेयं सितं लोहितं कृष्णश्वेतरसाधिकं च कथितं स्वादोत्तरोत्तर्यतः ॥ त्रैविध्यादिह तन्दुलाश्च हरिताः श्वेतास्तथा लोहिताः सामान्येन भवन्ति तेऽप्यथगुणैः स्युः पूर्वपूर्वोत्तराः ॥ ५५ ॥ राजान्नंआधेपसिद्धः॥ षष्टिकः षष्टिशालिः स्यात्षाष्टिजः स्निग्धतण्डुलः । षष्टिवासरजश्चैव तथा मासद्वयोद्भवः ॥ ५६ ॥ प्रोक्तो राजनिघण्टे तु पुरातनभिषग्वरैः । महाव्रीहिः कृष्णव्रीहिर्यवकः पाक एव च ॥ ५७ ॥ रक्तसारमुखो यश्च प्रोक्तो धन्वन्तरौ ध्रुवम् । द्रव्यरत्नाकरे प्रोक्तं अन्हवो भिषजांवरैः ॥५८ ॥ गौरो नीलः षष्टिकोयं द्विधा स्यादाद्यो रुच्यः शीतलो दोषहारी । बल्यः पथ्यो दीपनो वीर्यवृद्धिं दत्ते चास्मात्किंचिदूनो द्वितीयः ॥५९॥ काळीसाळ ॥ कृष्णशालिः कालशालिः श्यामशालिः सितेतरः । प्रोक्तो राजनिघन्टे तु भिषक्विद्यापरायणै ॥ ६० ॥ शावरश्चैव ऱ्हस्वश्च हतको धन्वनामके । कृष्णशालिः त्रिदोषघ्नो मधुरः पुष्टिवर्धनः ॥६१॥ वर्णकान्तिकरो बल्यो दाहजिद्वीर्यवृद्धिकृत् । अथ रक्तशाली । रक्तशालिस्ताम्रशालिः शोणशालिश्च लोहितः ॥ ६२ ॥ प्रोक्तो राजनिघण्टे च प्राचीनभिषगुत्तमैः । वृन्दारको महाशालिः सुगन्धः प्रसन्नस्तथा ॥ ६३ ॥ मुष्टिको भिषजां श्रेष्ठैः प्रोक्त धन्वन्तरौ ध्रुवम् । रक्तशालिः सुमधुरो लघुः स्निग्धो बलावहः ॥ ६४ ॥ रुचिकृद्दीपनः पथ्यो मुखजाड्यरुजापहः । सर्वामयहरो रुच्यः पित्तदाहानिलास्रजित् ॥६५॥ अथ निःशूकशाली ॥ मुण्डशालिर्मुण्डनको निःशूको यवशूकजः । प्रोक्ता राजनिघण्टे तु निघण्टूपजीविभिः ॥ ६६ ॥ मुण्डशालिस्त्रिदोषघ्नो मधुराम्लो बलदः । अथ थोरसाळी । स्थूलशालिर्महाशालिः स्थूलांशःस्थूलतन्दुलः ॥६७॥ एवगुणाढ्यशालाश्च नामान्यूह्यानि सूरिभिः । प्रोक्तो राजनिघण्टे तु

भिषग्विद्योपजीविभिः ॥ ६८ ॥ महाशालिस्वादुर्मधुरशिशिरः पित्तशमनो ज्वरं जीर्णं दाहं जठररुजमह्नाय शमयेत् । शिशूनां वायूनां यदपि जयतां वा हितकरः सदा सेव्यः सर्वैरनलबलवीर्याणि कुरुते ॥ ६९ ॥ **बारीक साळी।** सूक्ष्मशालिः सूचिशालिः श्वेतशालिश्च सूचकः । प्रोक्ता राजनिघण्टेऽस्मिन्पुरातनचिकित्सकैः ॥ ७० ॥ सूक्ष्मशालिः सुमधुरो लघुपित्तास्रदाहनुत् । दीपनः पाचनः पथ्यः किंचिद्वातविकारजित् ॥ ७१ ॥ **अथ सुगन्धशाली ।** गन्धशालिस्तु कुल्माषो गन्धालुः कलमोत्तमः ॥सुगन्धिर्गंधबहुलः सुरभिर्गन्धतण्डुलः ॥ ७२ ॥ प्रोक्तो 'राजनिघण्टे' तु वैद्यविद्याविशारदैः॥ सुगन्धशालिर्मधुरोतिवृष्यदः पित्तश्रमास्रारुचिदाहशान्तिकृः ॥ स्तन्यस्तु गर्भस्थिरतात्पवातदः पुष्टिप्रदश्चाल्पकफश्चबल्यदः ॥ ७३ ॥ **अथ तिरियशाली ॥** तिरियो मधुरः स्निग्धः शीतलो दाहपित्तजित् ॥ त्रिदोषशमनो रुच्यः पथ्यः सर्वामयापहः ॥ ७४ ॥ **अथ गौरशाली ॥** व्रीहीर्गौरो मधुरशिशिरः पित्तहारी कषायः स्निग्धो वृष्यः क्रमिकफहरस्तापरक्तापहश्च ॥७५॥ पुष्टिं दत्ते श्रमशमनकृद्दीर्घवृद्धिं विधत्ते रुच्योत्पन्नं जनयति मुदं वातकृन्मेचकोन्यः ॥ ७६ ॥ **जोंधळेसामान्य ॥** यवनालो पावनालः शिखरी वृत्ततण्डुलः २ दीर्घनालो दीर्घशरः क्षेत्रेक्षुःश्चेक्षुपत्रकः ॥ ७७ ॥ प्रोक्तो "राजनिघण्टे' तु पुरातनचिकित्सकैः । जूर्णाव्हयस्तद्दलश्च धन्वे प्रोक्तो युगन्धरः ॥ ७८ ॥ अथ नालो देवधान्यं जुनला तु नलस्तथा । तानीयकास्तिणीका च जमली 'क्षेपदेवके' ॥ ७९ ॥ **पांढरे जोंधळे ।** धवलो यावनालश्च पाण्डुरस्तारतण्डुलः । नक्षत्रकान्तिविस्तारो वृत्तो मौक्तिकतण्डुलः ॥ ८० ॥ प्रोक्तो राजनिघण्टे' तु वैद्यविद्याविशारदैः। धवलो यावनालस्तु गौल्यो बल्यस्त्रिदोषनुत् ॥ ८१ ॥ वृष्यो रुचिप्रदोऽर्शोघ्नः पथ्यगुल्मव्रणापहः । **तुरेजोंधळे ।** तुवरो यावनालश्च कषायादिस्तथैव च ॥ ८२ ॥ रक्तस्तु लोहितश्चैव प्रोक्तं तुवरधान्यकम् । तुवरो यावनालस्तु कषायोऽष्णो विशोफकृत् । संग्राही वातशमनो विदाही शोष-

कारकः ॥ शारदो यावनालस्तु श्लेष्मदः पिच्छलो गुरुः ॥ ८३ ॥ शिशिरो मधुरो वृष्यो दोषघ्नो बलपुष्टिदः । गहूं । गोधूमो बहुदुग्धः स्यादपूपो म्लेच्छभोजनः ॥ ८४ ॥ यवमानिस्तुपक्षीरी रसालः सुमनश्च सः । प्रोक्तो 'राजनिघण्टे' तु वैद्यशास्त्रज्ञपण्डितैः ॥ ८५ ॥ 'धन्वन्तरिनिघण्टे' च हुड्वा परिकीर्तिता । हीनो यवो दन्तियवस्तोक्तो हीनमरस्तथा ८६ यवोत्तमो यवनकः प्रोक्तः 'कैयनिघण्टके' । स्मृतो 'मदनपाले' तु मधुलोऽनुपिसीतकः ॥ ८७ ॥ गोधूमः स्निग्धमधुरो वातघ्नः पित्तदाहकृत् ॥ गुरुःश्लेष्मप्रदो बल्यो रुचिकृद्वीर्यवर्धनः ॥ ८८ ॥ जोदगहूं ॥ अन्यो गोधूमसंज्ञश्च स्निग्धस्तु लपूर्वकः ॥८९॥ प्रोक्तो 'राजनिघण्टे' तु वैद्यशास्त्रज्ञपंडितैः ॥ 'द्रव्यरत्नाकरे' चैव त्रिशतिक इति स्मृतः॥९०॥ नान्दीमुखोल्पगोधूमास्तक्षोकः सायसीकफः ॥ प्रोक्तो 'मदनपाले' तु वैद्यविद्याविशारदैः ॥९१॥ मधुली स्वल्पगो धूमो मध्यदेशज एव च॥ निशीको वेसिकश्चैव दीर्घकस्तदनन्तरम् ॥९२॥ गोधूमः सूक्ष्मसंज्ञश्च कैयनन्दीमुखी स्मृतः ॥ स्निग्धोन्यो लघुगोधूमो गुरुवृष्यकफापहः । आमदोषकरो बल्यो मधुरो वीर्यपुष्टिदः ॥ ९३ ॥ जव ॥ यवो मध्यस्तु दिव्यश्च सितशूकस्तथैव च ॥ अक्षता कंचुकी चैव धान्यराजस्तदुत्तरम् ॥ ९४ ॥ तीक्ष्णशूकस्तु सरतश्च हयेष्टस्तदनन्तरम् ॥ पवित्रधान्यः संप्रोक्तो 'राजनामनिघण्टके' ॥ ९५ ॥ वाजीप्रियः शुचिश्चैव निःशूकोऽतियवस्तथा ॥ यवशूको हरितश्च स्तोकस्तु 'कैयदेवके' ॥९६॥ 'द्रव्यरत्नाकरे' चैव वैद्यैः प्रोक्तो हविष्यकः ॥ मिलित्वा विंशतिः प्रोक्तो वैद्यविद्याविशारदैः ॥ ९७ ॥ यवः कषायो मधुरः सुशीतलः प्रमेहजित्पित्तकफापहारकः ॥ अशूकमण्डस्तु यवो बलप्रदो वृष्यश्च नृणां बहुवीर्यपुष्टिदः॥९८॥ अथ वेणुयव ॥ वेळूचें बीज ॥ वेणुजो वेणुबीजश्च वंशजो वंशतण्डुलः ॥ वंशधान्यं च वंशाह्वं वेणुस्तु तदनन्तरम् ॥ ९९ ॥ वंशबीजं च कविभिः प्रोक्तं 'राजनिघण्टके' ॥ शीतः कषायो मधुरस्तु रूक्षो मेहक्रिमिश्लेष्मविषापहश्च ॥ पुष्टिं च वीर्यं च बलं च दत्ते पित्तापहो वेणुयवप्रशस्तः ॥९८००॥ सामान्यमूग ॥ सूपश्रेष्ठस्तु मुद्गश्च

वर्णार्हश्च रसोत्तमः ॥ मुक्तिप्रदो हयानन्दो भूफलो वाजिभोजनः॥ १ ॥ प्रो क्तो 'राजनिघण्टे' च वैद्यशास्त्रज्ञपण्डितैः॥ मंगल्या हरिता मुद्गा बलाटःप्रथमो हरित् ॥२॥ गीतः प्रथमखण्डीरः शारदो वस्तुको जयः॥ कैयदेवनिघण्टे' तु *मिलित्वा दश सप्त च ॥३॥* **काळेमूग** *॥ वासन्तः कृष्णमुद्गश्च वासन्तो माध*-वस्तथा ॥ 'राजनामनिघण्टे' तु वैद्यैः 'प्रोक्ता' सुराष्ट्रजा ॥४॥ 'कैयदेवनि-घण्टे' च संप्रोक्तो हरिमन्थनः॥ कृष्णमुद्गस्त्रिदोषघ्नो मधुरो वातनाशनः ॥५॥ लघुश्च दीपनः पथ्यो बलवीर्याग्निपुष्टिदः ॥ **हिरवेमूग** ॥ हरिन्मुद्गः शारदश्च धूसरो 'गजनामके' ॥ ६ ॥ हरिन्मुद्गः कषायाम्लो मधुरः कफपित्तहृत् ॥ रक्तमूत्रामयघ्नश्च शीतलो लघुदीपनः ॥७॥ **मुग्या** ॥ वनमुद्गा तुवरको राजमुद्गा च खण्डकः ॥ 'कैयदेवे' भिषक्श्रेष्ठैः संप्रोक्तो नैव संशयः ॥ ८ ॥ **अथ धूसर पिंवळे मूग** ॥ तद्वच्चधूसरो मुद्गोरसवीर्यविपु स्मृतः । कषायो मधुरो रुच्यः पित्तवातविबन्धकृत ॥ ९ ॥ **मुगाचेंकढण** । पित्तज्वरार्तिशमनं लघुमुद्गयूषं संतापहारि तदरोचकनाशनं च । रक्तप्रसादनमिदं यदि सैन्धवेन युक्तं तदा भवति सर्वरुजापहारि ॥१०॥ **उडीद** । मापस्तु करविन्दश्च धान्यवीरो वृपाकरः । बलाढ्यो मांसलश्चैव पित्र्यश्च पितृभोजनः ॥११॥ प्रोक्तो 'राजनिघण्टे' तु पुरातनचिकित्सकैः । धन्वन्तरिनिघण्टे ' च कुरुविन्दस्तुपाकरः ॥ १२ ॥ पित्रार्हकविभिः प्रोक्तं ' द्रव्यरत्ननिघण्टके ' ॥ मापः स्निग्धो बहुमलकरः शोपणः श्लेष्मकारी वीर्येणोष्णो झटति कुरुते रक्तपित्तप्रकोपम् । हन्याद्वातं गुरुबलकरं रोचको भक्ष्यमाणः स्वादुर्नित्यं श्रमसुखवतां सेवनीयो नराणाम् ॥ १३ ॥ **हिरवेउडीद** । राजमाषो नीलमाषो नृपमाषो नृपोचितः । प्रोक्तो 'राजनिघण्ट' तु वैद्यविद्याविचक्षणैः॥१४॥ अलसार्दस्तु चपलो बलो 'द्रव्यनिघण्टके' । चञ्चलश्च महामाषः प्रोक्तो मदनपालके॥१५॥ कफपित्तहरो रुच्यो वातकृद्बलदायकः । **हरभरे** । चणस्तु हरिमन्थश्च सुगन्धः कृष्णचञ्चुकः ॥ १६ ॥ बालभोज्यो वाजिभक्षश्चणकः कञ्चुकी 'नृपे' ।वाजिमन्थः 'कैयदेवे' संप्रोक्तो हयजीवनः॥१७॥वाजिभक्षोऽश्व जी-

चश्च 'द्रव्यरत्नाकरे' स्मृतः । चणको मधुरो रूक्षो मेहजिद्वातपित्तकृत् ॥ १८॥ दीप्तिवर्णकरो बल्यो रुच्यश्चाध्मानकारकः ॥मठ॥ मकुष्टः कामयष्टश्च वनमुद्गः किर्मीलकः ॥ १९ ॥ अमृतोरण्यमुद्गश्च वल्लीमुद्गो 'नृपे' स्मृतः । अतिरूढा तथा प्रोक्ता 'धन्वन्तरिनिघण्टके' ॥ २०॥ कामकुष्टोऽभकुष्टश्च बल्लको 'मदने' स्मृतः । मकुष्टकः कषायः स्यान्मधुरो रक्तपित्तजित् ॥२१॥ ज्वरदाहहरः पथ्यो रुचिकृत्सर्वदोषहृत् ॥ मसूर ॥ मसूरो रागदालिश्च मङ्गल्या पृथुबीजकः ॥ २२ ॥ शूरकल्याणबीजश्च गुटबीजस्तु 'राजके'॥ मसूरिका मयूरश्च पाण्डुरा 'कैयदेवके'॥२३॥ मधुरा चैव सूप्या च पृथवः पित्तभेषजः ॥ हरेणवः सतीनश्च चणक्यस्तु करालकः ॥ २४ ॥ अष्टादशे तु संप्रोक्ता मिलित्वा सर्वतोध्रुवम् ॥ मसुरो मधुरः शीतः संग्राही कफपित्तजित् ॥ २५॥ वातामयकरश्चैव मूत्रकृच्छ्रहरो लघुः । वाटाणे । कलायो मुण्डचणको हरेणुश्च सतीनकः ॥ २६ ॥ शमनोनलकश्चैव कण्ठी 'राजनिघण्टके' । 'धन्वतरौ' स्मृतो नूनं वर्तुलः स्वल्पवर्तुलः ॥२७॥ नवसंख्यो भिषक्श्रेष्ठैः संप्रोक्तो नैव संशयः । कलायः कुरुते वातं पित्तदाहकफापहः ॥ २८ ॥ रुचिपुष्टिप्रदः शीतः कषायश्चामदोषकृत् ॥ लांक ॥ लंका कराला त्रिपुटा काण्डिका रूक्षणात्मिका ॥ २९ ॥ करटा खण्डका चैव कलायो 'धन्वनामके'। घण्टिका क्षुद्रघण्टिका 'द्रव्यरत्नाकरे' स्मृता ॥३० ॥ तथा 'मदनपाले' तु चण्डिका प्रोच्यते बुधैः॥ लका रुच्या हिमा गौल्या पित्तजिद्वातकृद्गुरु ॥ ३१ ॥ तुरी ॥ आढकी तुवरी वर्षा करवीरभुजा तथा । वृत्तबीजा पीतपुष्पा कृष्णरक्ता सिता-'नृपे' ॥३२॥ करवीरानुगा तुल्या 'धन्वन्तरिनिघण्टके' । 'द्रव्यरत्नाकरे' सूप्या प्रोक्ता वैद्यजने ध्रुवम् ॥ ३३ ॥ आढकी तु कषाया स्यान्मधुरा कफपित्तजित् ॥ ईषद्वातकरा रुच्या विदुला गुरुसंग्रही ॥ ३४॥ सा च श्वेता दोषहन्त्री हिता चेद्रुच्या बल्या पित्ततापादिहन्त्री।साश्यामा चेद्वीपर्ना पित्तदाहध्वंसा बल्यं चाढकी यूषयुक्तम् ॥ ३५॥ कुलित्थ। कुलित्थस्ताम्रबीजश्च श्वेतबीजः सितेतरः । प्रोक्तो 'राजनिगण्टे' तु वैद्यविद्याविशारदैः ॥३६॥

चत्रिकश्चैतुचक्रश्च कुलाली वनजस्तथा। 'द्रव्यरत्नाकरे' प्रोक्ता पुरातन-भिषग्वरैः ॥ ३७ ॥ उर्वरा स्थिरमुद्गाश्च त्वालिस्कन्धः सुराष्ट्रजा । काक-वृन्तस्तु कविभिः स्मृतो 'धन्वन्तरौ' ध्रुवम् ॥३८॥ कुलधानकरश्चैव प्रोक्तो 'मदनपालके'। कुलित्थस्तु कषायोष्णो रुच्यो वातकफापहः॥३९॥ **चव-ळ्या** । क्षुवः क्षुधाभिजननश्चपलो दीर्घशिंबिका । सुकुमारो वृत्तबीजो मधुरः क्षवको 'नृपे' ॥४०॥ क्षवः कषायो मधुरः शीतलः कफपित्तजित्। वृष्यः श्रमहरो रुच्यःपवनाध्मानकारकः ॥ ४१॥ **गोड पावटे** ॥ मधुरः श्वेतनि-ष्पावो माध्वीका मधुशर्करा । पलङ्कषा स्थूलशिम्बी वृत्ता मधुसिताऽसिता ॥४२॥ प्रोक्तो 'राजनिघण्टे'तु वैद्यविद्याविचक्षणैः । निष्पावः श्वेत-शिम्बी च पालकाख्या मुखप्रिया ॥ ४३ ॥ 'धन्वन्तरिनिघण्टे' तु प्रोक्ता वै नैव संशयः । राजशिम्बी वल्लकश्च प्रोक्तो ' मदनपालके ' ॥ ४४ ॥ **कडु पावटे** । ततस्तु कटुनिष्पावः पिचुंटो नदिजस्तथा । नदीनिष्पावसं-ज्ञस्तु प्रोक्तो 'राजनिघण्टके' ॥ ४५ ॥ मधुशर्करा सुरुच्या मधुराल्पक-षायका । शिशिरा वातला बल्या चाध्मानगुरुपुष्टिदा ॥ ४६ ॥ **कडू पावटे** । नदीनिष्पावकस्तिक्तः कटुकोष्णप्रदो गुरुः । वातुलः कफरो रूक्षः कषायो विषदोषनुत् ॥ ४७ ॥ **तीळ** । तिलस्तु होमधान्यश्च पवित्रः पितृतर्पणः । पापघ्नं पूतधान्यं च जर्तिलस्तु वनोद्भवम् ॥४८॥ प्रोक्तो 'राजनिघण्टे' तु वैद्यशास्त्रपरायणैः । ततस्तैलफलं पूतः स्नेहपूरः परोपलः ॥ ४९ ॥ 'कैयदेवनिघण्टे' तु संप्रोक्तो भिषजांवरैः । स्निग्धो वर्णबलाग्निवृद्धिजननः स्तन्योनिलघ्नो गुरुः सोष्णः पित्तकरोल्पमूत्रक-रणः केश्योतिपथ्यो व्रणे । ग्राही स्यान्मधुरः कषायसहितस्तिक्तो विपाके कटुः कृष्णः पथ्यतमः सितोल्पगुणदः क्षीणास्तिलान्येतिलः ॥ ५० ॥ **पेंड** । तैलकिट्टं च पिण्याकः खरस्तु तैलकल्कजः । प्रोक्तो 'राजनि-घण्टे' तु पुरातनचिकित्सकैः।पललं तिलकल्क स्यात्तिलचूर्णं च पिष्टकम्। ॥५१॥ पललं मधुरं रुच्यं पित्तास्रबलपुष्टिदम् । पिण्याकः कटुको

१ खर्बुरो

गौल्यः कफवातप्रमेहनुत् ॥ ५२ ॥ **जवस** । अतसी पिच्छला देवी मदगन्धा मदोत्कटा । उमा क्षुमा हेमवती सुनीला नीलपुष्पिका ॥ ५३ ॥ प्रोक्ता 'राजनिघण्टे' तु भिषक्शास्त्रोपजीविभिः । रुद्रपत्नी रुद्रनीला मसृणा च सुवल्कला ॥५४॥ चेलु क्षौमी 'कैयदेवे' वैद्यश्रेष्ठैः स्मृता ध्रुवम् । तथा 'मदनपाले' तु पार्वती परिकीर्तिता ॥ ५५ ॥ अतसी मदगन्धा स्यान्मधुरा बलकारिका । कफवातकरी चैषापित्तहृत्पृष्ठशूलहृत् ॥५६॥ **मोहरी**। असुरी राजिका राजी रक्तका रक्तसर्षपः । तीक्ष्णगन्धा मधुरिका क्षवका क्षुतका क्षरः ॥५७॥ प्रोक्तो 'राजनिघण्टे' तु वैद्यशास्त्रविचक्षणैः । असुरी कटुतिक्तोष्णा वातप्लीहार्तिशूलनुत् ॥५८॥ दाहपित्तप्रदा हन्ति कफगुल्मक्रिमिव्रणान् । **राजसर्षपकः** । राजसर्षपकस्तिक्तः प्रोक्तो 'राजनिघण्टके' ॥५९॥ राजसर्षपकस्तिक्तः कटूष्णो वातशूलनुत् । पित्तदाहप्रदो गुल्मकण्डूकुष्ठव्रणापहा ॥ ६० ॥ **श्वेतमोहऱ्या** । सर्षपस्त्वनघो गौरः सिद्धार्थो भूतनाशनः ॥ कटुस्नेहो ग्रहघ्नश्च कण्डुघ्नो राजिकाफलः ॥ ६१ ॥ दुराधर्षस्तीक्ष्णकश्च रक्षोघ्नः कुष्ठनाशनः । सितसर्षपसंज्ञश्च प्रोक्तो 'राजनिघण्टके' ॥ ६२ ॥ रक्षोपहस्तु भूतघ्नो दुर्दुभो विजयावहः । 'कैयदेवे' भिषक्श्रेष्ठैः संप्रोक्तो नैव संशयः ॥ ६३ ॥ सिद्धार्थः कटुतिक्तोष्णो वातरक्तग्रहापहः । त्वग्दोषशमनो रुच्यो विषभूतव्रणापहः ॥ ६४ ॥ इति **शिंबीधान्यवर्गः** ॥

अथसावे ॥ श्यामाकः श्यामबीजश्च स्त्रीवर्जितोऽविघिप्रियस्तथा । सुकुमारो राजधान्यं तृणबीजोत्तमो 'नृप' ॥ ६५ ॥ 'धन्वन्तरिनिघण्टे' तु तृणभक्षो गवांप्रियः । मुनिभक्तो भिषक्श्रेष्ठैः संप्रोक्तो नैव संशयः ॥६६॥ श्यामाकः क्षुद्रधान्यश्च 'द्रव्यरत्ने' तृणाभिधा । श्यामाको मधुरः स्निग्धः कषायो लघुशीतलः ॥ ६७ ॥ वातकृत्कफपित्तघ्नः संग्राही विषदोषनुत् । **कोद्रव,, हरक** । कोद्रवः कोरदूषश्च कुद्दालो मदनाग्रजः ॥ ६८ ॥ प्रोक्तो 'राजनिघण्टे' तु वैद्यकर्मोपजीविभिः ॥ कोद्रवो मधुरस्तिक्तो व्रणीनां पथ्यकारकः ॥६९ ॥ कफपित्तहरो रूक्षो

मोहकृद्वातलो गुरुः । अथ वन्या । वरकः स्थूलकंगुश्च रूक्षः स्थूलप्रियङ्गुकः ॥ ७० ॥ प्रोक्तो 'राजनिघण्टाख्ये' पुरातनभिषग्जनैः ।' द्रव्यरत्नाकरे ' चैव गुच्छो जूलकसंस्मृतः ॥ ७१ ॥ गवेधुका च गोजिह्वा कर्षणीया सिता धनी । वरको मधुरो रूक्षः कषायो वातपित्तकृत् ॥७२॥ राळे । प्रियङ्गुः कङ्गुणी कङ्गुचीनकः पीततण्डुलः । वर्तुलः कुसुमाख्श्च प्रोक्तो 'राजनिघण्टके' ॥७३ ॥ चीनाकस्त्वस्थिसत्र्न्वी ' धन्वन्तरिनिघण्टके ' । ' द्रव्यरत्नाकरे ' प्रोक्तो वार्षिकः पाटलोपमः॥ ७४ ॥ प्रियङ्गुर्मधुरो रुच्यः कषायः स्वादुशीतलः । वातकृत्पित्तदाहघ्नो रूक्षो भग्नास्थिसन्धिकृत् ॥ ७५ ॥ रानसाळी । नीवारोऽरण्यधान्यश्च मुनिधान्यतृणोद्भवम् । प्रोक्त ' राजनिघण्टे ' च वैद्यविद्याविशारदैः ॥ ७६ ॥ तापसो मुनिभक्तश्च जलजश्च प्रसारकः । सुप्रसादकसंज्ञश्च प्रोक्तो ' धन्वन्तरौ ' ध्रुवम् ॥ ७७ ॥ नीवारोमधुरः स्निग्धः पवित्रः पथ्यदो लघुः । नाचण्या । राङ्गी तु लांछनश्चैव तद्वद्बहुदलस्तथा ॥ ७८ ॥ ततो गुन्छकणीशश्च प्रोक्तो ' राजनिघण्टके ' । नर्तकश्चकमस्यं च निःशूलो भूहरः स्वरः ॥ ७९ ॥ ' द्रव्यरत्नाकरे ' प्रोक्तो भिषक्श्रेष्ठैर्न संशयः । तिक्तो मधुरकषायः शीतः पित्तास्रनाशनो बलदः ॥ ८० ॥ कुरीधान्य । कुरी तु तृणधान्यं च प्रोक्त राजनिघण्टके । कुरी तु मधुरं बल्य वाजिनां पुष्टिदायकम् ॥८१॥ लाजा । एके च व्रीहयो भ्रष्टास्ते लाजा इति संज्ञिताः । यवादयश्च ये भ्रष्टास्ते धानाः परिकीर्तिताः ॥ ८२ ॥ लाजाश्च यवधानाश्च तर्पणं पित्तनाशनी । *अथ भाजीशाल्याचे गुण । गोधूमशालिनालोत्था किंचिदु*ष्णाश्च दीपनाः॥८३॥ ओंब्या पोहे । केदारपंकेर्गोधूमैराकुलः परिकीर्तितः । व्रीहयोप्यर्धपक्वास्तु तप्तास्ते पृथुकाः स्मृताः ॥ ८४ ॥ आकुला गुरवो *वृष्याः स्वादवो बलकारिणः । पृथुका दुर्जराः स्निग्धा हृद्या* मान्द्यविवर्धनाः ॥ ८५ ॥ हुरडा, ओलेतादुळ ॥ दुग्धबीजा सुमधुरा दुर्जरा वीर्यपुष्टिदा ॥ अडळा ॥ तप्ताश्चणाः कफहराः परमोलकास्ते सद्यस्तृपार्तिरुचिपित्तकृतश्चजग्धाः । वातालदाः सुखकरा ह्यनलाश्च रूक्षा हृद्या

भवन्ति सुखदा युववालकानाम् ॥ ८६ ॥ घुगडिया ॥ मुद्गगोधूमचणका यावनालादयः स्मृताः ॥ यदर्धपक्वं तद्धान्यं विष्टम्भाध्मानदोषकृत् ॥ ८७ ॥ कणिक ॥ शुष्कगोधूमचूर्णं तु कणिका समुदाहृता ॥ स्फोटास्तु चणकादीनां दालीति परिकीर्तिता ॥८८ ॥ अथनवादिधान्यगुणाः ॥ पक्वं हरितलूनं च धान्यं सर्वगुणावहम् ॥ शुष्कलून तु निःसारं रूक्षं तत्क्षतनाशम् ॥ ८९ ॥ नवं धान्यमभिष्यन्दि लघु संवत्सरोषितम् ॥ पद्युषितं लघु पथ्यं त्रिवर्षोत्रिर्बल भवेत् ॥ ९० ॥ नवें जुनें धान्य गुणः ॥ चणस्तु यवगोधूमस्तिलमाषा नवा हिताः । पुराणा विरसा रूक्षा अहिता दुर्जराबलाः ॥ ९१ ॥ अथ वापितावापितधान्यगुणाः ॥ धान्यं वापितमुत्तमं तदखिलं छिन्नोद्भव मध्यमं ज्ञेयं यवववापितं तदधम निःसारदोषप्रदम् । दग्धायां भुवि यत्करोति विपिने ये वापिताः शालयो ये च छिन्नभवा भवन्ति खलु ते विण्मूत्रबन्धप्रदाः ॥ ९२ ॥ उदकभेदभूमिभेदधान्यगुणाः ॥ क्षारोदकसमुत्पन्नं धान्यं सर्वरुजापहम् ॥ स्वादुशुभ्रोदके जातं धान्यं सर्वरुजापहम् ॥ ९३ ॥ सुस्निग्धमृत्तिकोद्भूत धान्यमोजोबलापहम् । बलपुष्टिप्रभावघ्नं वालुकामृत्तिकोद्भवम् ॥ ९४ ॥ अथ धान्यादिचतुष्टयम् ॥ धान्यं श्रेष्ठ षष्टिकं राज्यभोग्यं मांसं स्वाज तैत्तिरं लावकीयम् । पानीयं स्यात्कृष्णमृत्स्नास्थलोत्थं क्षीराज्यार्दा गव्यमाज्यं च शस्तम् ॥ ९५ ॥ सजगुरे । सज्जको बहुशूकश्च तद्धान्यं दीर्घपत्रकम् । वंशपत्रं चातिदीर्घं दीर्घशीर्षकरः स्मृतः ॥ ९६ ॥ कृष्णशूकरतीक्ष्णशूको ह्यकण्ठः शूकश्रेणिधृक् । मरुदेशोद्भवश्चैव प्रवरानीरदेशतः ॥ ९७ ॥ जातः सज्जगुरुर्नाम पाके गुरुतरः स्मृतः । अवृष्यो लघुशीतश्च वृषशोफकरः परः ॥ ९८ ॥ रूक्षः कषायः स्वादुश्च सर्ववातप्रकोपनः । आध्मानरुक्करश्चैव रक्तपित्तहरः स्मृतः ॥ ९९ ॥

॥ इति धान्यवर्गः समाप्तः ॥

अथ मांसवर्गः । तत्र मांसम् । मांसं तु पिशितं क्रव्यं पलं स्यात् सारमसृक्कथा । पलल जांगलं कीरं मरिषं राजनाम के ॥ ६९०० ॥ आमिषं

लोमनं रस्यं तथा शोणितसंभवम् । अङ्कुजं कीनसंज्ञं च 'धन्वे' राक्षसभोजनम् ॥ १ ॥ अथ सिंहः । सिंहः पञ्चमुखो नखी मृगपतिर्मानी हरिः केसरी क्रव्यादो नखरायुधो मृगरिपुः शूरः कटीरावकः । विक्रान्तो द्विरदान्तको बहुबलो दीप्तो बली विक्रमी प्रोक्तो राजनिघण्टके कविवरैर्हर्यक्षकः पिङ्गलः ॥ २ ॥ 'द्रव्यरत्नाकरे' प्रोक्तो मृगेंद्रः पञ्चवक्त्रकः । त्रयोविंशतिसंख्याको मिलित्वा प्रोच्यते बुधैः ॥ ३ ॥ सिंहमांसं शिरोरोगसमीरणकफापहम् । अथ शरभ ॥ शार्दूल ॥ महामृगस्तु शरभो महास्कन्धी महामनः ॥ ४ ॥ अष्टपादो महासिंहो मनस्वी पर्वताश्रयः । प्रोक्तो 'राजनिघण्टे तु शास्त्रविद्याविचक्षणैः ॥ ५ ॥ मेघस्कन्धो धन्वनाम्नि कविभिः परिकीर्तितः । शार्दूलो मृगनाथश्च 'द्रव्ये' पञ्चनखः स्मृतः ॥ ६ ॥ शार्दूलं तु कफानाहनेत्रामयहरं लघु । अथ वाघ । व्याघ्रः पञ्चनखो व्यालः शार्दूलश्च गुहाश्रयः ॥ ७ ॥ तीक्ष्णदंष्ट्रः पुण्डरीको द्वीपी भीरुर्नखायुधः । प्रोक्तो 'राजनिघण्टे' तु कविभिर्विदुषां वरैः ॥ ८ ॥ मृगारिर्मृगहश्चैव पालिर्भीमपराक्रमः । द्रव्यरत्नाकरे प्रोक्तः शास्त्रविद्याविशारदैः ॥ ९ ॥ अथ चित्ता ॥ चित्रकश्चित्रकायश्च क्षुपव्याघ्रो मृगान्तकः । शूरश्च क्षुद्रशार्दूलश्चित्रव्याघ्रो नृपे स्मृतः ॥ १० ॥ चित्तको वेगवांश्चित्ता द्विपी स्यात्तीक्ष्णदंष्ट्रकः । 'द्रव्यरत्नाकरे' प्रोक्तो द्वादशाव्हो मनीषिभिः ॥ ११ ॥ अस्वल । ऋक्षस्तु भल्लको भल्लः सशल्यस्तदनन्तरम् । दुर्घोषश्चैव भक्तश्च पृष्ठदृष्टिरवद्रुचरम् ॥ १२ ॥ रागिद्विषो दीर्घकेशश्च चिरायुर्दुश्चरस्तथा । दीर्घदर्शी कविवरैः प्रोक्तो 'राजनिघण्टके' ॥ १३ ॥ तरस । मृगादनस्तरक्षुश्च तथैव घोरदर्शनः । प्रोक्तो 'राजनिघण्टे' च 'धन्वे' फेरुस्तु भल्लकः ॥ १४ ॥ शार्दूलसिंहशरभर्क्षतरक्षुमुख्या येन्यान्प्रसह्य विनिहत्य हि वर्तयन्ते । ते कीर्तिताः प्रसहनाः पललं तदीयमर्शप्रमेहजठरामयजाड्यहारि ॥ १५ ॥ कोल्हा । शृगालो वञ्चकः क्रोष्टा पौरवः फेरुजम्बुकौ । शालावृकः शिवालुश्च फेरण्डो व्याघ्रसेवकः ॥ १६ ॥ प्रोक्तो 'राजनिघण्टे'

तु शास्त्रज्ञकुशलैर्नरैः। शृगालमांसं बलदं वृष्यं वातकफापहम् ॥ १७ ॥ **लांडगा**। ईहामृगस्तु कोकश्च विरुग्वत्सादनस्तथा । गोवत्सारिश्छागभोजी छागलान्त्रोऽजनाशनः ॥ १८ ॥ प्रोक्तो ' राजनिघण्टे तु पुरातनमहाजनैः। उष्णं वातहरं स्वर्यं हितमक्षिविकारजित् ॥ १९ ॥ **कुत्रें** । कुक्कुरः सारमेयश्च भीषणः शुनकः शुनः। मल्लको वक्रलांगूलो वृकारी रात्रिजागरः॥ २० ॥ कालेयको ग्राम्यमृगो मृगारिर्भृङ्गदशकः। शूरो बद्धः शयालुश्च मण्डश्चैवातिकामुकः ॥ २१ ॥ प्रोक्तो ' राजनिघण्टे ' तु शास्त्रविद्याविशारदैः। भक्षणः श्वा भूस्तरश्च मल्लूको ' राजनामके ' ॥ २२ ॥ शुनामिष गुरु स्निग्धमुष्णं निद्रा च शुक्रहृत् । **मांजर**। बिडालो मूषकारातिर्वोतुश्च विषदंशकः॥ २३ ॥ शालावृकश्च मार्जारो मायावी दीप्तलोचनः। संप्रोक्ता राजनाम्नीति पुरातनमनीषिभिः॥ २४॥ विषवन्तश्च गोमायुर्धन्वे मूषकभक्षकः ॥ मार्जारमांसं स्निग्धोष्णं मधुरं कफवातजित् ॥ २५ ॥ **जवारी मांजर**॥ लोमशश्चैव मार्जारो पूतिको मारजातकः॥ सुगन्धिमूत्रपतनो गन्धमार्जारको नृपे॥ २६ ॥ धन्वन्तरिनिघण्टे तु संप्रोक्तः पूतिसोरकः। गुणस्तु पूर्ववत् ॥ **हत्ती** ॥ द्विरदस्तु गजः कुम्भी मतङ्गश्चेभसंज्ञकः ॥२७॥ तथा द्विरदनश्चैव वारणः पद्म एव च। हस्ती करी च करटी विषाणी नागनामकः॥ २८॥ कुञ्जरो रदनी मन्दो बलसादो द्विपी तथा ॥ भद्रसवरमो दन्ती द्रुमारिः षष्टिहायनः॥ २९ ॥ धन्वतरौ द्विपः पद्मी मातङ्गः सिन्धुरस्तथा ॥ स्तम्बेरमो मतङ्गश्च प्रोक्तो विद्याविशारदैः ॥ ३० ॥ भद्रो मदो मृगश्चैव त्रिविधो गज उच्यते ॥ हस्तिक्रव्यं गुरु स्निग्धं वातुलं श्लेष्मकारकम् ॥ ३१ ॥ बलपुष्टिप्रदं चेषद्दुर्जरं मन्दवन्हिदम् ॥ **हस्तीचें पिलूं** ॥ बालस्तु कलभश्चैव दुर्दान्तो व्याल एव च ॥ ३२ ॥ मस्तहस्ति ॥ प्रभिन्नो गर्जितो भ्रान्तो मत्तो मदकलस्तथा ॥ **हस्तीण** ॥ इभी तु करिणी चैव हस्तिनी धेनुका वशा ॥ ३३ ॥ करेणुः पद्मिनी चैव मातङ्गी वासिता तथा। प्रोक्ता राजनिघण्टे तु पुरातनमनीषिभिः ॥ ३४ ॥ **गेंडा** ॥ खड्गः खड्गमृगः क्रोधी

क्रोडी च मुखशृङ्गकः ॥ मुखेवली गण्डकश्च वज्रचर्मस्तु खड्गिणी ॥३५॥ वध्रीणः कविभिः प्रोक्तो राजनामनिघण्टके । गण्डजं वन्ध्वविण्मूत्रपवित्रो-करवाजिवत् ॥ ३६ ॥ **अथ उंट** ॥ उष्ट्रो दीर्घगतिश्चैव बली करभ एव च । दासेरुको धूसरश्च लम्बोष्ठो रवणस्तथा ॥ ३७ ॥ क्रमेलको महा-जंघो दीर्घो बीजाधिकस्तथा ॥ महाऽशृंखलकश्चैव महाग्रीवो महांगकः ॥ ३८ ॥ महाध्वगो महानादो महापृष्ठो बलिष्ठकः । प्रोक्तो राजनिघ-ण्टे तु वैद्यविद्याविचक्षणैः ॥३९॥ मेलकश्चैव धूम्रश्च तथैव दीर्घमार्गकः। वक्रग्रीवो दीर्घजंघोऽमयो दासेरुको धनौ ॥ ४० ॥ उष्ट्रमांसं तु शिशिरं त्रिदोषशमनं लघु ॥ बलपुष्टिप्रदं रुच्यं मधुरं वीर्यवर्धनम् ॥ ४१ ॥ **हेलगा** । महिषः कासरः क्रोधी कलुषोऽश्वारिरेव च । सैरिभस्तु लुला-यश्च मत्तो रक्ताक्षिरेव च ॥ ४२ ॥ विषाण्यंगबली चैव बली चैव नृपे स्मृतम् । शृंगी यमः कृष्णदन्ती पीनस्कन्धो रजस्वलः ॥४३॥ धन्वन्तरि-निघण्टे तु संप्रोक्तो विदुषांवरैः । **हैस** । महिषी मन्दगमना महाक्षीरा *पयस्विनी ॥ ४४ ॥ लुलायकान्ता कलुषा तथा तुरगद्वेषिणी । प्रोक्ता* राजनिघण्टे तु विद्यार्थकुशलैर्नरैः ॥ ४५ ॥ ग्रामिण माहिष मांसं स्निग्धं निद्राकरं च पित्तहरम् ॥ **वृषभ** । गौर्भद्रो बलीवर्दो दम्यो दान्तः स्थिरो बली ॥४६॥ उक्षोऽनड्वान्ककुद्माश्च वृषभो ऋषभो वृषः । धर्मस्तु धुरिणो धूर्यः शाक्वरो हरवाहनः ॥४७॥ गोनाथश्चैव बोढश्च धवलः सैरभेयकः। धवलः शबलस्ताम्रः श्वित्रः करसलो नृपे ॥ ४८ ॥ धन्वन्तरिनिघण्टे च दुर्धरः परिकीर्तितः। **अथ पेटविला बैल** । विनीतः शिक्षितश्चैव धैरिकः परिकी-र्तितः ॥ ४९ ॥ **गोन्हा** । बालो वत्सतरश्चैव दुर्दान्तो गण्डिरः स्मृतः । गोप्रियो गोपतिश्चैव महोक्षः पुगवः स्मृतः॥ ५० ॥ **गाय** ॥ गौर्मातोस्रा *शृंगिणी च सौरभेयी महेन्द्रजा । अघ्न्या तु रोहिणी धेनुर्दोग्ध्री भद्रा* तदुत्तरम् ॥ ५१ ॥ सूरिमहानडह्वा च कल्याणी पावनी तथा । अर्जु-नीति कविश्रेष्ठैः प्रोक्ता राजनिघण्टके ॥ ५२ ॥ अप्लुत गोभवं गव्यं गुरुवातकफप्रदम् । **वनगाय** । वनगौर्गवयश्चैव बलभद्रो महागवः॥ ५३ ॥

गवयी वनधेनुश्च प्रोक्ता भिल्लगवी नृपे । गवयामिषं तु बल्यं रुच्यं वृष्यं च बृहणम् ॥ ५४ ॥ **चामरी गाय.** । चमरो व्यजनो वन्यो धेनुर्गोपालधी प्रियः । चमरी दीर्घवाला च नृपे प्रोक्ता गिरिप्रियः ॥ ५५ ॥ कीर्तितं नात्यभिष्यन्दि मांसं प्रायस्तु जाङ्गलम् । **रानडुकर** । वराहस्तनुरोमश्च स्तब्धरोमस्तु रोमशः ॥ ५६ ॥ किटिर्दंष्ट्री वक्रदंष्ट्रः कीरश्च सूकरस्तथा । क्रोडो दन्तायुधश्चैव बलिश्च पृथुस्कधकः ॥ ५७ ॥ मुदारश्चैव पौत्री च कोलो घोणान्तभेदनः । पौत्रायुधश्च शूरश्च बहुपत्यो रदायुधः ॥ ५८ ॥ प्रोक्तो ' राजनिघण्टे ' तु कविभिः शास्त्रवित्तमैः । किटिक्रोडः किटिश्चैव ' धन्वतरिनिघण्टके ॥ ५९ ॥ वाराहमांसं गुरु वातहारि वृष्यं बलस्वादुकरं वनोत्थम् । **ग्रामडुकर** ॥ विड्वराहो ग्रामिणश्च ग्रामसूकर एव च ॥ ६० ॥ ग्राम्यक्रोडो ग्राम्यकोलो विष्टाशो भूविदारकः । विलम्बितमृगश्चैव प्रोक्तो ' राजनिघण्टके ' ॥ ६१ ॥ तस्माद्गुरुग्रामवराहमांसं तनोति मेदोबलवीर्यवृद्धिम् । **घोडा** ॥ अश्वो घोटस्तुरङ्गश्च तुरगस्तु तुरङ्गमः ॥ ६२ ॥ वाहो वाजी मुद्गभोजी वीतिसप्तिश्च सैंधवः । हरिर्हयश्च धाराटो जवनो जीतवो जवी ॥ ६३ ॥ गन्धर्वो वाहनश्रेष्ठो श्रीभ्राताऽमृतसोदरः । प्रोक्तो ' राजनिघण्टे ' तु शास्त्रार्थकुशलैर्नरैः ॥ ६४ ॥ हयस्तु शालिहोत्रश्च ययुर्धन्वन्तरौ स्मृतः । **अथ शिंगरु** । भूकला दुर्विनीतश्च किशोरस्तुरगार्भकः ॥ ६५ ॥ **अथ घोडी** । वाजिनी वडवा वामी प्रसूराश्वाश्विनी 'नृपे । ' धन्वन्तरिनिघण्टे ' च वामनी परिकीर्तिता ॥ ६६ ॥ अश्वमांसं भवेदुष्णं वातघ्नं गौरवं लघु । पित्तदाहप्रदं नृणां तदेतच्चातिसेवनात् ॥ ६७ ॥ **गाढव** । गर्दभः शङ्कुकर्णश्च बलीयो रासभः खरः । भारवाहो भूरिगमश्चक्रिवान्धूसरो ' नृपे ' ॥ ६८ ॥ ' धन्वन्तरिनिघण्टे ' च सम्प्रोक्तो रेणुभूषितः । गर्दभप्रभवं मांसं किंचिद्गुरु बलप्रदम् ॥ ६९ ॥ रुच्यं तु वनजं शैत्यं बहुवीर्यबलप्रदम् । **अथ खेचर** । खेसरोऽश्वखरोद्भूतः सकृद्गर्भोऽध्वगः क्षमी ॥ ७० ॥ सतुद्यो मिश्रजश्चैव मिश्रशब्दोऽतिभारगः । प्रोक्तो ' राजनिघण्टे '

तु कविभिः शास्त्रवेत्तृभिः ॥ ७१ ॥ ' धन्वन्तरिनिघण्टे ' च वाम्योऽ- श्वतराध्वगः । **बोकड शेळी** । अजो बुकस्तु मेध्यश्च लम्बकर्णश्च. छागलः ॥ ७२ ॥ बर्करश्चैव छागश्च मेको बस्तः पयस्वलः । अजा पयस्विनी मीरुश्छागी मेध्या गलस्तनी ॥ ७३ ॥ प्रोक्ता ' राजनिघण्टे ' तु बुद्धिमद्भिर्न संशयः । छागमांसं लघु स्निग्धं नातिशीतं रुचिप्र- दम् ॥ ७४ ॥ निर्दोषं वातपित्तघ्नं मधुरं बलपुष्टिदम् । **मेंढी** । मेषो मेंढो हुडश्चैव मेढुः कर्णायुरूरुणः ॥ ७५ ॥ **एडका** । शृंगी तु येडको- ऽविश्च त्वरज्ञो लोमशो बली । प्रोक्तो ' राजनिघण्टे ' तु कविभिर्विदुषां वरैः ॥ ७६ ॥ मेषमांसं गुरुस्निग्धं बल्यं पित्तकफप्रदम् । मेदपुच्छामिषं वृष्यं कफपित्तकरं गुरु ॥ ७७ ॥ **हरण** । मृगः कुरङ्गो वातायुः कृष्ण- सारः सुलोचनः । हरिणोऽजिनयोनिश्च येणः पृषतराजके ॥ ७८ ॥ कुसारङ्गः सशालोऽङ्कुः शबलः पृष्ठ एव च । चारुलोचनसंज्ञश्च स्मृतो धन्वन्तरौ ध्रुवम् ॥ ७९ ॥ ' द्रव्यरत्नाकरे ' चैव ताम्रवर्णः प्रकी- र्तितः । एणस्य मांसं लघु शीतवृष्यं त्रिदोषहृत्पङ्कसदं च रुच्यम् ॥ ८० ॥ कुरङ्गमांसं मधुरं च तद्वत्कफापहं मांसदापिरानाशि । **चितळ** । ककुवा ग्रन्थसारंगः शाखी शृङ्गश्च चित्रलः ॥ ८१ ॥ प्रोक्तो ' राज- निघण्टे ' तु कविभिः शास्त्रवित्तमैः । चित्रांगाश्चित्तलः स्विन्ने वत्सकर्णश्च पीतकः ॥ ८२ ॥ ' धन्वन्तरिनिघण्टे तु संप्रोक्तो विदुषांवरैः । विषांगो वातलः कश्चिन्मधुरो बलवर्द्धनः ॥ ८३ ॥ **रोहिस** । रुरुस्तु रोहिषो रोही दश्यशम्बरनीलकौ । पृषतो रंकुसश्चैव बलपृष्टश्च ' राजके ' ॥ ८४ ॥ न्यंकुश्च रोहिरोहीशो ' धन्वन्तरिनिघण्टके ' किंचिद्धि वातलो ज्ञेयो मधुरः कान्तिकारकः ॥ ८५ ॥ **सांबर** । सारङ्गो महाशृंगो नृपे वनप्रियः स्मृतः । शाबरो बहुविषाणी च धन्वन्तरिनिघ- ण्टके ॥ ८६ ॥ तद्वच्छम्बरमांसं तु वृष्यं दोषत्रयापहम् । **श्रीकारी** । शिखायूपः कुरंगश्च श्रीकारी च महाजवः ॥ ८७ ॥ जवनो वेगिहरिणो जंघालो जंघिकाव्हयः । प्रोक्तो राजनिघण्टे तु पुरातनचिकित्सकैः ॥ ८८ ॥ श्रीकारी स भवं मांसं लघु हृद्यं बलप्रदम् ॥ **माकड** । वानरो

मर्कटः कीशः कपी शाखामृगो हरिः ॥ ८९ ॥ प्लवङ्गमो वनौकश्च प्लवङ्गः प्लवनः प्लवः। प्रोक्तो राजनिघण्टे तु कविभिःशास्त्रदृष्टिभिः ॥९०॥ वनेचरो दुर्मुखश्च धन्वे च वनगोचरः। वानरः पवनः श्वासभेदःपाण्डुकृमिश्रयेत् ॥ ९१ ॥ **वानर** ॥ गोलागूलस्तु गौरास्यः कपिः कृष्णमुखस्तथा। मन्दुरो भूषणाख्यश्च नृपोक्तः कृष्णवानरः ॥ ९२ बिलेशया हतमृगाः सम्प्रोक्ताः कविभिर्' नृपे '। गुणस्तु पूर्ववत् ॥ **खवलेमांजर**। शल्यः शल्यमृगश्चैव वज्रशुक्तिर्बिलेशयः ॥ ९३ ॥ प्रोक्तो ' राजनिघण्टे ' तु धन्वे चाल्पमृगः स्मृतः। **साळई**। शल्यः शली विदित्युक्तः शलाली राजनामके ॥ ९४ ॥ **सारसळ**। शल्यलोम्नी तु शलली शललं शलमेव च ॥ प्रोक्तो 'राजनिघण्टे' च सम्यक्शास्त्रार्थदृष्टिभिः ॥ ९५ ॥ शलकं तु शलिकश्चैव सूचिनाऽविःसधा तथा। खरा ' धन्वनिघण्टे ' च 'द्रव्ये' तु शुचिना स्मृतः ॥ ९६ ॥ शलूकः श्वासकासास्रशोषदोषत्रयापहः। सेधा तथैव विज्ञेया विशेषाद्बलवर्धनी ॥ ९७ ॥ **खोकड** । कोंकडो जवनः कोंको वावो बिलशयः स्मृतः। 'नृपे' चमरपुच्छश्च लोमशो धूम्रवर्णकः ॥ ९८ ॥ ज्ञेयो मधुरवृत्तश्च श्वासानिलपित्तहरं तन्मासं पित्तवाहकरम् ॥ **मुंगस** ॥ नकुलः शुचिवक्त्रश्च सर्पारिर्लोहितानवः ॥ ९९ ॥ सर्पदर्वीकरश्चैव ततो द्विरसनस्तथा। पातालनिलयश्चैव बली 'राजनिघण्टके' ॥७०००॥ ' धन्वन्तरिनिघण्टे ' च पिङ्गलो बभ्रुरुच्यते । कृशताश्वासकासघ्नो नकुलः श्लेष्मवातजित् ॥ १ ॥ **नाग** ॥ नागस्तु काद्रवेयश्च वक्रांगो द्वन्द्वशूककः ॥ चक्षुःश्रवा विषधरो गूढाघ्रिः कुण्डली फणी ॥ २ ॥ पन्नगो वायुभक्षश्च भोगी सर्पो द्विजिव्हकः ॥ दष्ट्री भुजंगोऽहिश्चैव कंचुकी च सरीसृपः ॥३॥ उरगो दीर्घपुच्छश्च भुजगो " राजनामके ' ॥ आशीविषस्तु व्यालश्च जिव्हको 'धन्वनामके' ॥ ४ ॥ **सर्पभेद**. ॥ गोनासो मण्डली चैव चित्राङ्गो व्यंतरी तथा ॥ कुलको हरितश्चैव राजिलं डुण्डुभ 'नृपे' ॥ ५ ॥ श्वेतनागोऽरुणः सर्पस्तथैव चित्रनामकः ॥ गोनसश्चैव पीतश्च कलङ्गः कृष्णडुण्डुभः ॥ ६ ॥ राजिलो जलसर्पश्च चिरळो

'धन्वनामके' ॥ श्वासानिलकासहरं तन्मांसं पित्तदाहकरम् ॥ ७ ॥ **घूंस॥** महामूषकसंज्ञस्तु मूषी विघ्नेशवाहनः ॥ महागः सस्यमारी च भूफलो भित्तिपातनः ॥ ८ ॥ प्रोक्तो ' राजनिघण्टे ' तु मुखीभूपस्तु ' धन्वके ' ॥ **चुचुंचरी** ॥ चुचुचरी राजपुत्री तथैव प्रतिमूषिका ॥ ९ ॥ सुगन्धमूषिका गन्धा शुण्डी निशुण्डी मूषिका । प्रोक्ता राजनिघण्टे तु कविभिः शास्त्रवेत्तृभिः ॥ १० ॥ **उंदीर** ॥ पिंगोखुर्मूषकश्चैव नखी खनक उंदिर ॥ बिलकारी च धान्यारिर्नृपे बहुप्रजः स्मृतः ॥ ११ ॥ धन्वतरिनिघण्टे च खननः परिकीर्तितः ॥ श्वासानिलकासहरं तन्मांसं पित्तदाहकरम् ॥१२॥ **घोरपड** ॥ गोधा तु गोधिका दारुमुख्या 'राजनिघण्टके' ॥'धन्वन्तरिनिघण्टे' च वास्तुमत्स्या प्रकीर्तिता ॥१३॥ गोधानिलहरा बल्या वृष्या मेध्या च कीर्तिता ॥ **सरडा** ॥ सरटः कृकलासस्य प्रतिसूर्यः शयानक ॥ १४ ॥ वृतिस्थः कण्टकागारो दुरारोहो द्रुमाश्रयः ॥'धन्वन्तरिनिघण्टे' च सूतः सूर्यः शयानकः ॥ १५ ॥ **घुइरा सरड** । जाहाको गात्रसंकोची मण्डली बहुरूपकः । कामरूपी विरूपी च पेलुवासो ' नृपे ' स्मृतः॥१६॥ **पाल** । पल्ली तु मुसली चैव गृहगोधा विषम्भरा । ज्येष्ठा च कुड्यपुच्छा च पल्लिका तु ' नृपे ' स्मृता ॥ १७ ॥ **तन्तुवायः । कांतीण** । तन्तुवायस्तूर्णनाभो लूता फर्कटकः कृमिः । ' धन्वन्तरिनिघण्टे ' च सप्रोक्ता मर्कटकिमिः ॥ १८ ॥ **विपकिडा** । हलाहलस्त्वञ्जलिका ' नृपे ' कुटिलकीटका ॥ **विंचू** । वृश्चिकः शूककीटश्च दलीद्रेणस्तु वृश्चिकः॥१९॥ ' द्रव्ये ' शतपदी चैव चित्रागः परिकीर्तिता । **गोम** । ' नृपे ' कर्णजलूका च चित्रांगी शतपादिका ॥ २० ॥ **काळी मुंगी**। पिप्पली स्त्रीसञ्ज्ञिका च ' नृपे ' प्रोक्ता पिपीलिका । **तेलमुंगी** । उदया कपिजपीका ' नृपे ' तैलपिपीलिका ॥ २१ ॥ **मुंगळा** । कृष्णा तु पीपिली स्थूला ' नृपे ' वृक्षरुहा स्मृता॥ **ढेकूण** । मत्कुणो रक्तपायी च रक्तांगो मञ्चकाश्रयः ॥ २२ ॥ बिलेशयः कविश्रेष्ठैः सप्रोक्तो नेव सशयः ।

**अथ जलेशयप्राणिमांसगुणाः । तत्र जलेशयप्राणी ।** जलजन्तुर्जल-

प्राणी क्रूरकर्मा जलेशयः ॥ २३ ॥ जलव्यालः कविश्रेष्ठैः प्रोक्तो ' राजनिघण्टके ' । **मासा** । मत्स्यो वैसारिणो मीनः पृथुरोमा झपोण्डजः ॥ २४ ॥ विसार- शकुली शक्तो पाठीनो ' राजनामके ' । **मत्स्यभेदः** । राजीवः शकुलो शृंगी वागुसः शलपल्लवः ॥ २५ ॥ पाठीनः कुलरश्चैव नद्यावर्तश्च मुद्गरः ॥ तिमिरो विदुषाश्रेष्ठैः प्रोक्तो ' राजनिघण्टके ' ॥२६॥ विस्मृतो यो पुनः प्रोक्तो तत्रैवानिमिषस्तिमिः ॥ ' धन्वन्तरिनिघण्टे ' च कुलिशः शल्यचुल्लकः ॥ २७ ॥ कुशली चैव कठी च रोहितस्तिमिराण्डजः ॥ **मकराख्यमहामत्स्यभेदः** ॥ मकराख्यस्तु मातगो मकरस्तु चिलीचिमः ॥ २८ ॥ तिमितिमिगिलश्चैव तिमिंगिलगिलस्तथा । महामत्स्यः कविश्रेष्ठैः सप्रोक्तो ' राजनामके ' ॥ २९ ॥ ' धन्वन्तरिनिघण्टे ' च चिरिल्लिः परिकीर्तितः ॥ मत्स्या बलकरा वृष्या गुरव' कफपित्तलाः ॥ ३० ॥ उष्णाभिष्यंदिनः स्निग्धा बृंहणाः पवनापहाः । नादेया बृंहणा वृष्या गुरवोनिलनाशनाः ॥ ३१ ॥ कौप्या वृष्याः कफाष्ठीलामूत्रकृच्छ्रविबंधदाः । तडागा गुरवो वृष्याः शीतला बलमूत्रदाः ॥ ३२ ॥ तडागवन्निर्झरजा बलायुर्मतिदक्कराः ॥ सरोजा मधुराः स्निग्धा बल्या वातनिबर्हणाः ॥ ३३ ॥ सामुद्रगुरवो नातिपित्तलाः पवनापहाः ॥ तत्रापि लवण भोज्या ग्राहिणो ह्विनाशनाः ॥ ३४ ॥ इन्द्रोद्भवा बलकरा न तु स्वच्छजलोद्भवाः । हेमन्ते कूपजा मत्स्याः शिशिरे सारसा हिताः ॥ ३५ ॥ मधग्रीष्माम्बुकालेषु नदीचोद्भूतडागजाः । शरत्सु नैर्झराः सर्वे वर्षास्तथाः सर्वदोषदाः ॥ ३६ ॥ कषायानुरसः स्वादुर्वातघ्नो नातिपित्तकृत् । रोहितः सर्वमत्स्याना वरा वृष्योर्दितार्तिजित् ॥ ३७ ॥ कषायमधुरा रूक्षो विशदो रोचनो लघुः । ग्राही तु नक्कावर्तस्तरयानुसकलः स्मृतः ॥ ३८ ॥ **इतिसर्वमत्स्यभेदगणः** ॥ अथ **सुसर** ॥ शिशुकः शिशुमारश्च ग्राहो राजी वराहकः ॥ **मगर** ॥ नक्रस्तु कुम्भिरश्चैव गिलग्राहमहाबलौ ॥ ३९ ॥ प्रोक्तो ' राजनिघण्ट ' तु कविभिर्विदुषावरैः । ' धन्वन्तरिनिघण्टे ' तु मकरस्तुपिदष्टकः

॥ ४० ॥ शिशुमारो गुरुर्वृष्यः कफकृद्वातनाशनः । बृंहणो बलदः स्निग्धस्तद्वन्यकरमादिशेत् ॥ ४१ ॥ **कांसव** ॥ कच्छपः कमठः कूर्मो गूढांगो धरणीधरः । कच्छेष्टः पल्लावासस्तथा कठिनपृष्ठकः ॥ ४२ ॥ वासो वृत्तश्च कविभिः समोक्तो 'राजनामके' । वृत्तस्तु पल्वलावासो 'धन्वन्तरिनिघण्टके' ॥ ४३ ॥ कच्छपो बलदः स्निग्धो वातघ्नः पुंस्त्वकारकः ॥ ॥ **खेंकडा** ॥ कर्कटस्तु कर्कटकः कुलीरश्च कुलीरकः ॥ ४४ ॥ नवशकः पंकवासास्तर्यग्गाम्पूर्ण्येदको 'नृपे' । कर्कटो बृहणो वृष्यः शीतलोसृग्गदापहः ॥ ४५ ॥ **बेडूक** । मडूको दर्दुरो भद्रो हरिर्भेकश्च लूलुकः । शालुकश्चैव वर्षाभूः प्लवः कटुरवो 'नृपे' ॥४६॥ **राजमंडूक थोरला बेडूक** ॥ ततस्तु राजमण्डूको महामण्डूक एव च । पीतागः पीतमडूको वर्षाघोषो महारवः ॥ ४७ ॥ 'प्रोक्ता राजनिघंटे' तु कविश्रेष्ठैर्न सगयः । मण्डूकश्लेष्मलो नातिपित्तलो बलकारकः ॥४८॥ **जळवा** ॥ जलूका तु जलौका च रक्तपा रक्तपायिनी । रक्ते सदशिका तीक्ष्णा वमनी जलजीवनी ॥४९॥ प्रोक्ता 'राजनिघंटे' तु वसुसख्या भिषग्वरैः ॥ **पाणीकावळा** ॥ जलकाक दवात्यूहः कालकंठश्च 'राजके' ॥ ५० ॥ **जलपारवा** । जलपारावतश्चैव तथा जलकपोतकः । पीतकाकश्च कविभिः प्रोक्तो 'राजनिघंटे' ॥ **इतिमलेशयाः** ॥५१॥ **अथसाधारणपक्षी** । खगस्तु विहगश्चैव विहगोथ विहंगम । विपतिश्चैव पत्री च पतत्री पत्रवाहनः ॥ ५२ ॥ शकुनिः शकुनश्चैव तथैव विष्किराडज । विः पतगो खगश्चैव नगौकश्च पतत्रभः ॥ ५३ ॥ वाजिपत्रोंडजश्चैव द्विजः पक्षी निडोद्भवः । गुगः शकुतः पतगः पिच्छिनी पतगस्तथा ॥ ५४ ॥ विकिरो विदुधाश्रेष्ठैः समोक्तो 'राजनामके' । विपत्रश्चैव तिर्यंचो वयाविः खेचरो वनी ॥५५॥ **गीध्र** ॥ गृध्रस्तार्क्ष्यः शाल्मलिस्थः खगेंद्रो भुजगांतकः । वज्रतुंडस्तु दाक्षायो गरुत्मान्दूरदर्शन ५६ प्रोक्तो 'राजनिघंटे' च दाक्षिण्याधन्वनामके ॥ **रणगीध** ॥ करगो नीलपिच्छश्च लंबकर्णो रणप्रियः ॥ ५७ ॥ रणपक्षी पिच्छबाणः स्थूलनीलो

भयंकरः। प्रोक्तो 'राजनिघंटे' च 'धन्वे' तु करकः स्मृतः ॥५८॥ गृध्रस्य काकवन्मांसं विशेषान्नेत्ररोगजित् ॥ **बहिरीससाणा** ॥ श्येनः शशादः क्रव्यादः कामांगश्च खगांतकः ॥ ५९ ॥ तरस्वी तीव्रसंतापो नृपेरिंमस्ताक्ष्यनायकः। 'धन्वन्तरिनिघण्टे' तु क्रव्यादः परिकीर्तितः ॥६०॥ श्येनर्चोरंभव मांसं प्रायो दोषकरं गुरु ॥ **कंकपक्षी** ॥ कंकस्तु लोहपृष्ठश्च सदंशवदनः खरः ॥ ६१ ॥ रणालंकरणः क्रूरः सद्यः स्यादामिषप्रियः॥ **कावळा**॥ काकस्तु वायसो ध्वांक्षः कोनोरिष्टः सकृत्प्रजः ॥६२॥ बलिभुग्वालिपुष्टश्च भूलिजंघो निमित्तकृत्। कौशिकारिश्चिरायुश्च करटो मुखरस्वरः ॥ ६३ ॥ आत्मघोषो महालोभश्चिरंजीवी तथैव च। चललोचनसंज्ञस्तु प्रोक्तो 'राजनिघंटके' ॥६४॥ 'धन्वंतरिनिघंटे' तु प्रोक्तश्चोलूकजित्तथा ॥ **रानकावळा** ॥ द्रोणस्तु द्रोणकाकश्च काकोलोऽरण्यवायसः ॥६५॥ वनवासी महाप्राणः कररावी पलप्रियः। प्रोक्तो 'राजनिघंटे' तु महाविद्याविशारदैः ॥ ६६ ॥ काकमांसं मासगांसं चक्षुष्यं दीपनं लघु। आयुष्यं दीपनं बल्यं क्षतदोषक्षयापहम् ॥ ६७ ॥ **घुबड** ॥ उलूकस्तामसो घूको दिवांधः कौशिकः कुविः। नक्तंचरो निशाटश्च काकारिर्वीरदर्शनः ॥६८॥ कविरर्धसहाभीरु'र्धन्वंतरिनिघंटके'। उलूकपललं भ्रांतिप्रदं वातप्रकोपदम् ॥ ६९ ॥ **वडवाघूळ** ॥ वल्गुली वक्त्रविष्ठोज्ञा दिवांधा च निशाचरी। स्वैरिणी च दिवास्वापा मांसेष्टा मातृवादिनी ॥ ७० ॥ प्रोक्ता 'राजनिघंटे' तु शास्त्रविद्याविशारदैः। वल्गुनी नक्तचारी च वक्त्रविष्ठाविनिर्गमा ॥७१॥ 'धन्वंतरिनिघंटे' च क्रव्यादी परिकीर्तिता। ॥ **मयूर** ॥ मयूरश्चंद्रिका बर्हिर्नीलकंठः शिखी ध्वजी ॥७२॥ मेघानंदी कलापी च शिखंडी चित्रपिच्छकः। बार्हिणः प्रचलाकी च शुक्लापांगः शिखावलः ॥ ७३ ॥ केकी भुजंगभोजी च मेघनाद उलासकः। बर्हिमारः कपालश्च बर्हिनेत्रः प्रचालकः ॥ ७४ ॥ शिखाज्ञेयो घनिः कालः प्रोक्तो 'राजनिघंटके'। नर्तको घनरावश्च धन्वतरिनिघंटके' ॥७५॥ मयूरमांसं सुस्निग्धं वातघ्नं शुक्रवर्धनम्। बल्यं मेधाकरं प्रोक्तं चक्षूरोग-

विनाशनम् ॥ ७६ ॥ **कर्कोची** ॥ कुर्कुरः स्वरशब्दश्च क्रौंचः शक्तचरः खरः ॥ **नीलकर्कोची** ॥ नीलक्रौंचस्तु नीलांगो दीर्घग्रीवोऽतिजागरः॥ ७७ ॥ प्रोक्तो ' राजनिघंटे ' तु कविभिः शास्त्रवेत्तृभिः । क्रौंचः पित्तानिलहरो पेचकः कफवातजित् ॥ ७८ ॥ **बगळा** ॥ कंको बको बकोटश्च तीर्थसेवी च तापसः । मीनघाती मृषाध्यायी निश्चलांगश्च दांभिकः ॥ ७९ ॥ ॥**बलाका**॥ बलाका बिलकंठी च शुष्कांगी दीर्घकंधरा ।धर्मांतःकामुकी श्वेता मेघनादा जलाश्रया ॥८०॥ प्रोक्ता ' राजनिघंटे ' तु शास्त्रविद्याविशारदैः । ततो बकबलाकाद्या गुरवो मांसभक्षणात् ॥ ८१ ॥ **चक्रवाक**॥ चक्रः कोकश्चक्रवाको रथांगो भूमिप्रेमकः । द्वंद्वचारी सहायश्च कांतेकामी तदुत्तरम् ॥८२॥ रात्रिविश्लेषगामी च वक्षोजः कामुको 'नृपे' । राज्ञी वियोगी 'धन्वे' च द्वंद्वगस्तु स्तनोपमः ॥८३॥ क्रव्यं च चक्रवाकस्य लघु स्निग्धं बलप्रदम् । वन्हिकृत्सर्वशूलघ्नमुष्णवातामयापहम् ॥ ८४ ॥ **सारस** ॥ सारसो रसिकः कामी नीलांगो मणितारवः । नीलकंठो रक्तनेत्रः काकुवा कामिवल्लभः ॥ ८५ ॥ प्रोक्तो 'राजनिघंटे' तु शास्त्रज्ञकुशलैर्नरैः । सारसस्य तु मांसं च मधुराम्लकषायकम् ॥ ८६ ॥ मेहातिसारपित्तघ्नं ग्रहण्यर्शोरुजापहम् ॥ **हंस** ॥ हंसो धवलपक्षी च चक्रांगो मानसालयः॥८७॥ कलहंसः कलवांश्च कलनादो मरालकः । हंसी तु वरटा चैव वरला वारला तथा ॥ ८८ ॥ मराली मंजुगमना चक्रांगी मृदुगामिनी । प्रोक्ता 'राजनिघंटे' तु शास्त्रार्थकुशलैर्नरैः ॥ ८९ ॥ हंसः स्निग्धो गुरुर्वृष्यो वीर्योष्णः स्वरवर्णकृत् । वातास्रपित्तशमनो बृंहणो बलवर्धनः ॥ ९० ॥ ॥**कोंबडा**॥ कुक्कुटस्ताम्रचूडश्च कालज्ञश्चरणायुधः । नियोद्धः कृकवाकुश्च विष्किरो नखरायुधः ॥ ९१ ॥ कुक्कुटः स्निग्धरूक्षोष्णः स्वराग्नींद्रियदार्ढ्यकृत् । बृंहणो वातहा वृष्यो लघुर्बलकृतः स्मृतः ॥ ९२ ॥ **होला** । कपोतः कोकदेवश्च धूसरो धूम्रलोचनः । दहनामिसहायश्च भीषणो गृहनाशनः ॥ ९३ ॥ प्रोक्तो 'राजनिघंटे' तु भस्मांगो घुघुकृद्ध्वनो । स्वादुः कषायश्च लघुः कपोतः कफपित्तहा ॥ ९४ ॥ **पारवा** ॥ पारावतः

कलरवस्तथैवारुणलोचनः । रक्तेक्षणः कुररवः कामी मदनक-स्तथा ॥ ९५ ॥ कंठीरवो वाग्विलासी तथा मदनमोहनः । गृहकपोतकः प्रोक्तो ' राजनामनिघंटके ' ॥ ९६ ॥ **खबूतर** ॥ पारावतस्तु अग्रदेशी कामुको घुघुलारवः । अंघ्रिच्छो गलरवः प्रोक्तो 'राजनिघंटके' ॥९७॥ पारावता गुरुः स्वादुः कषायो रक्तपित्तहा ॥ **कोकील** ॥ कोकिलः परपुष्टश्च कालः परभृतः पिकः ॥९८॥ वसतदू-तस्ताम्राक्षो गंधर्वो मधुगायनः । वासतः कालकंठश्च कामांधः काकली-रवः ॥ ९९ ॥ कुहूरवोऽन्यपुष्टश्च मत्तो मदनपाठकः । सुकंठी मधुरा-लापः कालकंठी मधून्मदः ॥ ७१०० ॥ कामगो वनभूपश्च प्रोक्तो 'राजनिघंटके' । कोका वसंतार्तवश्च 'धन्वंतरिनिघंटके' ॥ १ ॥ कोकिलो बृंहणः प्रोक्तो मधुरो बलवर्धनः । कफघ्नः स्वरकृद्ग्राही चक्षुष्यः कफका-सजित् ॥२॥ **राघा** ॥ शुकः कीरो रक्ततुंडो मेधावी मंजुपाठकः । राजशू-कस्तु प्राज्ञश्च शतपत्रो नृपप्रियः ॥ ३ ॥ प्रोक्तो ' राजनिघंटे ' तु धन्वे च प्रियदर्शनः । महाराजशुकश्चैव वक्रतुंडः प्रकीर्तितः ४ शुको बल्योथ वृष्यश्च वीर्यवृद्धिकरः परः । वातलो बृंहणो ज्ञेयस्तथा राजशुकः 'स्मृतः' ॥ ५ ॥ **साळुंखी** ॥ सारिका मधुरालापा दूती मेधावनी तथा । गोर-टीका गोकिराटी गोरिका कलहप्रिया ॥६॥ प्रोक्ता ' राजनिघंटे ' तु ' धन्वे' गोराटिका तथा । कलहाकुला गोविराटी संप्रोक्ता प्रियवादिनी ॥ ७ ॥ सारिका च भवेत्स्निग्धा वातला श्लेष्मला स्मृता । वीर्यसंजननी वृष्या मेध्या चैव रसायनी ॥ ८ ॥ **चकोर** ॥चकोरश्चंद्रिकापायी कौमुदी-जीवनो 'नृपे' ॥ चकोरो बृंहणो बल्यः स्निग्धोष्णो वातनाशनः ॥ ९ ॥ ॥**चातक** ॥ चातकस्तोककश्चैव सारंगो मेघजीवनः । 'नृपे' प्रोक्तः कविव-र्यैर्वैद्यशास्त्रार्थकोविदैः ॥ १० ॥ **कौंच** ॥ हरितस्तनलश्चैव प्रोक्ता 'राजनिघण्टके' ॥ **पॅचांपचे** ॥ तैलपास्तु पयोष्णी च जंतका जीनवत्रिका ॥ ११ ॥ **शृंगी** ॥ शृगः कलिंगो धूम्राटो वोषपट्टः कलिंगकः ॥ **भरद्वाज**॥ व्याघाटस्तु भरद्वाजो खंजनः खंजरीटकः ॥ १२ ॥ चातको नीलपित्तघ्ना

भारद्वाजः कफास्रजित् ॥ **चास** ॥ चापः किकीदिविश्चैव नीलांगः प्रिय-दर्शनः ॥ १३ ॥ **वर्तिका** ॥ वर्तिको वार्तिकश्चैव वर्ती तु गांजिकायकः॥ वार्तिकः कटुकः पाके कषायो वातकृल्लघुः ॥ १४ ॥ मेधाग्निवर्धनो वृष्यो ग्राही वर्णप्रसादनः ॥ **रानचिडी** ॥ चटकः कलविंकश्च कामुको नील-कण्ठकः ॥ १५ ॥ **गृहचिडी** ॥ चटका कलविंकी च चटकैस्तु तत्सुतः॥ **धूसरचिडी** ॥ धूसराऽरण्यचटका कुब्जा भूमिशया नृपे ॥ १६ ॥ **भोरडी** ॥ भारिटः श्यामचटका शैशिरः कणभक्षकः ॥ **अथ जिगजिगा**॥ गृहकृत्योऽक्षमो भीरुर्नपिद्विटः कणप्रियः ॥ १७ ॥ चटकः शीतलः स्निग्धः स्वादुः शुक्रकफप्रदः ॥ सान्निपातहरो वेश्मचटकः शुक्लः परः ॥ १८ ॥ **लावा** ॥ लावस्तु लावकश्चैव लवो लावो नृपे' स्मृतः ॥ ला-वा तु लावको लावश्चित्रदेहश्चतुर्विधः ॥ १९ ॥ पांसुलो गौरकश्चान्यो पौंड्रको दर्भरास्तथा ॥ लावो हृद्यो हिमास्निग्धो ग्राहिणो वह्निदीपनः ॥ २० ॥ पांशुलो श्लेष्मलस्तेषा वीर्योष्णोनिलनाशनः ॥ गौरकः कफ-वातघ्नो रूक्षो वन्हिप्रदः परः ॥ २१ ॥ पौंड्रकः पित्तदः किंचिल्लघुः श्ले-ष्मानिलापहा । दर्भरो रक्तपित्तघ्नो हृदामयहरो हिमः ॥ २२ ॥ तथा विपाके कटुकः सन्निपातेन पूजितः ॥ लावा सन्निपातहरः ॥ पक्षिणा लावकश्रेष्ठो लावको जागलात्मकः ॥ २३ ॥ सग्राही दीपनः श्रेष्ठः कषायो मधुरो लघुः ॥ **तित्तिर** ॥ तिमिरिस्तित्तिरश्चैव याजुषो 'राजनामके' ॥ २४ ॥ तित्तिरश्चित्रपक्षी स्यात्कृष्णो गौरः कपिंजलः । तित्तिरः सर्वदोषघ्नो ग्राहिवर्णप्रसादनः ॥ २५ ॥ हिक्काश्वासानिलहरो विशेषाद्गौरतित्तिरः । **पिंगळा** । क्षुद्रोलूकः शकुन्तेयः पिंगलो डुडुल-स्तथा ॥ २६ ॥ *वृक्षाश्रयी बृहद्रावी विशालाक्षो भयंकरः* ॥ **काळीचिडी**॥ श्यामा वराही शकुनी कुमारी चटका तथा ॥ २७ ॥ दुर्गा देवी पोतकी च रामा कृष्णा च याडवी । कालिका शिविका चैव प्रोक्ता 'राजनिघंटके' ॥२८॥ **काजवा** ॥ प्रभाकीटस्तु खद्योतः खज्योतिरुपसू-र्यकः ॥ **तेलिन** ॥ तैलिनी तैलकीटश्च षड्बिंदा दद्रुनाशिनी ॥ २९ ॥

॥ **बिरवोहटी** ॥ शक्रगोपस्तु वर्षाभू रक्तवर्णस्तथैव च । इन्द्रगोपकसज्ञस्तु समोक्तो 'राजनामके' ॥ ३० ॥ **भ्रमर** ॥ भ्रमर. षट्पदो भृगः कलालापः शिलीमुखः । पुण्यवयो द्विरेफोली मधुकृन्मधुपो द्विपः ॥ ३१ ॥ मस-रूश्चली घेली शकारी मधुलोलुप । इंदीवरश्च मधुलिट् रामतो मधु-मारकः ॥ ३२॥ 'प्रोक्ता राजनिघंटे' तु शास्त्रविद्याविशारदैः॥ **मोहोळमाशी** ॥चर्वाणा माक्षिका नीला शरगा मधुमक्षिका ॥ ३३॥ **गांधीण** ॥ गवारी वरटी क्षुद्रा क्षारा च क्षुद्रचर्वणा ॥**डांस** ॥ दशा दुष्टमुखः क्रूर· क्षुद्रिका वनमक्षिका ॥ ३४ ॥ माक्षिका चामृतोत्पन्ना वमनी चपला ' नृपे ' ॥**घुंगुर्डे** ॥ मशको वज्रतडश्च सूच्यास्यः सूक्ष्ममक्षिका ॥ ३५ ॥ रा॥त्रि-जागरदा धूम्रो नलिनाह्यन्यजा तथा ॥ **उवा** ॥ यूका तु केशकीटश्च स्वेदज. षट्पदा नृपे ॥ ३६ ॥ **लिखा** ॥ पक्ष्मयूका षट्चरणा श्वेतयू-कावस्त्रका । लीकायुकाडसज्ञश्च वस्त्रकाः परिकीर्तिताः ॥ ३७ ॥

## इति सिंहादिवर्ग समाप्त ॥ ६ ॥

**अथ मनुष्यवर्गः** ॥ **मनुष्य** ॥ मनुष्यो भूमिजो मर्त्यो मनुगो मानवो नरः । द्विपदश्चतनश्चैव समोक्तो 'राजनामके' ॥ ३८ ॥ भूस्पर्शो मानुष-श्चैव भूस्थस्तत्रैव कीर्तितः । **पुरुषः** । पुरुषो ना नरश्चैव पुमान्पचजन-स्तथा ॥ ३९ ॥ अर्थाश्रयोऽधिकारी च कर्मार्हस्तु पुमर्थवान् । प्रोक्तो 'राजनिघंटे' तु वैद्यविद्याविशारदै.॥ ४० ॥ **स्त्री** ॥ स्त्री योषा वनिता चैव सुनया ह्यबला तथा । नारी सीमंतिनी गमा वामागा ललनांगना ॥ ४१ ॥ कांता वधूः पुरध्री च सुभ्रुवा वरवर्णिनी । सुतनुश्चैव तन्वी च तनुस्तु कामिनी जनी ॥ ४२ ॥ सनेत्री चैव तन्वगी रमणी तदनन्त-रम् । भीरुः कुरंगनयना प्रिया च भामिनी तथा ॥ ४३ ॥ योषिच्च महिला चैव महेला च विलासिनी । नितंबिनी तु प्रमदा सुन्दरी मत्तका-मिनी ४४ ॥ अचितभ्रूर्वरलिता वामिता मानिनी तथा । वरारोहा नतांगी च विनता तु वरा तथा ॥ ४५ ॥ श्यामा तु दर्शिनी चैव भार्या जाया स्मृता ध्रुवम् । भार्या तु नवरी प्रोक्ता वायको प्राकृते

रत्ना ॥ ४६ ॥ कुटुंबिनी पुरंध्री च सुचरित्रा पिता तथा । साध्वी पतिव्रता प्रोक्ता ज्ञेया च तदनंतरम् ॥ ४७ ॥ कुलपालिका चैव पतिप्रिया स्वयंवरा । पतिंवरा तु वर्या च कुलस्त्री कुलपालिका ॥ ४८ पत्नी च गृहिणी च । प्रोक्ता 'राजनिघंटके' । उत्तमा चैव माता च विस्तृती तदनंतरम् ॥ ४९ ॥ कैशोरी चैव वराटाशी तथैव दीर्घसूत्रिका ॥ मायाली चैव कुत्सा च पुष्पभागीति 'द्वयात्मके' ॥५० ॥ नागर तु कामुका चैव गौरी कमललोचना । युवर्णा चैव यामा च प्रोक्ता धन्वन्तरी ध्रुवम् ॥ ५१ ॥ नवरत ॥ भर्ता पतिर्वरः कान्तः पतिदेवता प्रियो गृही । प्रोक्तो 'राजनिघंटे' तु वैद्यविद्याविशारदैः ॥ ५२ ॥ नपुंसक ॥ नपुंसकस्तु क्लीबश्च तृतीयप्रकृतिस्तथा । पंढः पंढो नारी पोटा स्त्रीपुंसा 'राजनामके ॥ ५३ ॥ पट्टराज्ञी॥ महादेवी तु राज्ञी च पट्टराज्ञी महिषी तथा । प्रोक्ता 'राजनिघंटे' तु भिषग्विद्यापरायणैः ॥५४॥ विलासिनी॥ भोगिन्या तु विलासिन्या संभुक्ते या च पार्थिवा । राजभोग्या सुगुप्ता च भक्तिन्या 'राजनामके' ॥ ५५ ॥ वेश्या ॥ वेश्या तु गणिका भोग्या वारस्त्री स्मरवीथिका । समास्नुषा जनी वश्या विरटी च सुवासिनी ॥ ५६ ॥ इच्छावती कामुका च वृषस्यंती च कामुकी । पुंश्चली चर्षणी चैव बधकी व्रतती तथा ॥ ५७ ॥ इतरी कुलटा चैव स्वैरिणी पांसुला तथा । अभिश्वी त्वरा चैव निष्पती त्वसुना ध्रुवम् ॥ ५८ ॥ अविश्वस्ता च विधवा समा चालिः गर्वा तथा । वयस्या पतिपत्नी च तथैव च सभर्तृका ॥ ५९ ॥ प्रोक्ता 'राजनिघंटे' तु चतुस्त्रिंशच्च गल्पका ॥ ब्राह्मण ॥ अग्रजन्मा तु ब्राह्मणो विप्रः षट्कर्मा द्विज उत्तमः ॥ ६० ॥ प्रोक्तो 'राजनिघंटे' तु कविभिः शास्त्रकोविदैः ॥क्षत्रियः ॥ राजा तु सार्वभौमश्च पार्थिवः क्षत्रियो नृपः ॥ ६१ ॥ प्रोक्तो राजनिघंटे तु कविभिः शास्त्रवित्तमैः॥ वैश्य ॥वैश्यस्तु व्यवहर्ता च विट्च वार्तिक एव च ॥६२॥ वणिजस्तु वणिक्चैव प्रोक्तो 'राजनिघंटके' ॥ शूद्र ॥ शूद्रश्चतुर्थः पज्जातो द्विजदास उपासकः ॥ ६३ ॥ प्रोक्तो 'राजनिघंटे' रिमनुरातन-

महाजनैः ॥ बाळ ॥ बालः पाकोऽर्भको गर्भः पोतकः पृथुकः शिशुः ॥६४॥ शावोर्भो बालिशश्चैव डिंभोथ बटुरुत्तमः । सुलैर्माणवकः प्रोक्तो 'राजनामनिघटके' ॥ ६५ ॥ तरुण ॥ युवा वयस्थस्तरुणो 'राजनामनिघटके'। लेंकरूं । बाल उत्तानशायी च डिंभस्तु स्तनपास्तथा ॥६६॥ स्तनधयी च कविभिः प्रोक्तो 'राजनिघटके' ॥ **कुमारी** । कन्या कुमारी गौरी च नग्निकानागतार्तवा ॥ ६७ ॥ प्रोक्ता 'राजनिघटे' तु कविभिः शास्त्रकोविदैः ॥ **मध्यमा**॥ मध्यमा तु वयस्था च युवती तरुणी 'नृपे' ॥ ६८ ॥ **तरुणी** । चिरटी सुषमा श्यामा प्रौढा दृढरजा 'नृपे' । **गरोदर** । गुर्विण्यापन्नसत्त्वा च ह्यंतर्वत्नी 'नृपे' स्मृता ॥६९॥ **निष्फला म्हातारी** ॥ निष्फला जरती वृद्धा स्थविरा च गतार्तवा । प्रोक्ता 'राजनिघटके' तु शास्त्रविद्याविचक्षणैः ॥ ७० ॥ **देह** ॥ तनुस्तनूः संहनन शरीर च कलेवरम् । क्षेत्र पुराणी गात्रं च मूर्तिस्तु यत्तकामकः ॥७१॥ देहोऽवर्णस्तगमितिपिंडविग्रह एव च । वरश्च कविभिः प्रोक्तो 'राजनामनिघटे' ॥ ७२ ॥ **अवयव** । अगमकः प्रतीकश्च जघनोऽवयवो 'नृपे' । ॥**मस्तक**॥ शिरः शीर्षं तु मुंड च मूर्द्धा मौलिश्च मस्तकम्॥ ७३ ॥ वरांगमुत्तमागं च कपाले केशभू 'नृपे' ॥ **डोळे**॥ दृग्दृष्टिर्लोचन नेत्र चक्षुर्नयनमीक्षणम् ॥ ७४ ॥ अक्ष ग्रहण चाक्षीर्दर्शनपू च विलोचनम् । प्रोक्तं महाजनैः सद्भी 'राजनामनिघटके' ॥ ७५ ॥ **केंस** । केशः शिरसिजो बालः कुंतला मूर्धजा कचा । चिकुरा चिहुराश्चैतद्वेष्टा॰कबरीमुखाः ॥ ७६ ॥ 'राजनामनिघटे' तु विद्वद्भिः कविभिः स्मृतः । **अपांग डोळ्याच्या कोन्या** ॥ अपांगो नेत्रपर्यंतो नयनोपांग 'राजके' ॥७७॥ **बुबुळें** ॥ तारा तु बिंबिनी चैव 'नृपे' प्रोक्ता कनीनिका॥ **कपाळ** ॥भाल ललाट॰लिक गोध 'धन्वंतरी' स्मृतम् ॥ ७८ ॥ **भोंवई** ॥ चिल्लिका नयनोर्ध्वा भू वल्ली नयनोर्ध्वगा । रोमराजीति विज्ञेया समोक्ता 'राजनामके' ॥ ७९॥ **कान** ॥ श्रुतिः श्रोत्र श्रवः कर्ण श्रवण च वचोग्रहम् । शास्त्रज्ञैः कविभिः प्रोक्त 'राजनामनिघटके' ॥ ८० ॥ **ओष्ट** ॥ ओष्ठोऽधरो दंतवासो दंतवस्त्र रद-

च्छदः । 'राजनामनिघटे' तु सप्रोक्तो विदुषावरैः ॥८१॥ **ओष्ठकोपरे** ॥ ओष्ठप्रातोसृक्किर्णीति प्राकृते कोपरे स्मृत' ॥ **नाक** ॥ घ्राण गंधवहो घोणो सिंघिणी नासिका ' नृपे ' ॥ ८२ ॥ **कानसूल** ॥ शसकः कर्ण-सामीप्य सिंघाण नासिकामलम् प्रोक्तो 'राजनिघटे' तु कविभि' शास्त्रकोविदैः ॥ ८३ ॥ **तोंड** ॥ तुंडमास्य मुख वक्त्र वदन पवनाननम् । प्रोक्त 'राजनिघटे' तु कविभिर्विदुषावरैः ॥ ८४ ॥ **हनवटी** ॥ ओष्ठाधश्चिबुक गड प्रोक्तो ' राजनिघटके' ॥ **गाल** ॥ गड्डः कपोलकः प्रोक्तो 'राजनामनिघटके ॥ ८५॥ **दांत** ॥ हनूर्ध्व दशन दता रदा रदनका द्विजाः ॥ प्रोक्तो 'राजनिघटे' तु कविभिः शास्त्रवित्तमैः ॥ ८६ ॥ **जीभ** ॥ जिव्हा रसज्ञा रसना प्रोक्ता ' राजानिघटके ' ॥ **टाळ** ॥ काकुद तालुक तालु प्रोक्त '-राजनिघटके ' ॥ ८७ ॥ **पडजीभ**॥ सूक्ष्मा जिव्हा घटिकाच लघिका ' राजनामके ' ॥ **गळ्यांतील जीभ** ॥ प्रतिजिव्होपजिव्हा च जिव्हिका मूलजिव्हिका ८८ अधोभागे स्थिता नून प्रोक्ता ' राजनिघटके' ॥ **अवंडा मानेचे आंतील सधी** ॥ अवडस्तु शिरःपश्चात्सधिघाटः कृकाटिका ॥ ८९ ॥ प्रोक्ता 'राजनिघटे' तु कविभिः शास्त्रवित्तमै ॥ **गळा**॥ कबुग्रीवा कधरा च प्रोक्ता '-राजनिघटके ' ॥ ९० ॥ विद्वद्भि कविभिर्नून शिरोधा च शिरोधरः ॥ **गळ्यांटी** ॥ कठो गलो निगालश्च ' नृपे ' तु गलशुंठिका ॥९१॥ **धमनी** ॥ गळ्याच्या शिरा खाद्यापासून कानापर्यंत ॥ धमनी चैव सेतुश्च प्रोक्ता ' राजनिघटके ' ॥ **उराची खांस**,॥ जत्रुरित्येव विख्याता सप्रोक्ता ' राजनामके ' ॥९२॥ **काख**॥ कक्षा दार्मूलमित्युक्त कविभी' राजनामनि' ।पार्श्व काखेखालील बरगड्या ॥ पार्श्वमित्येव सप्रोक्त, विद्वद्भी ' राजनामके ' ॥ ९३ ॥ **पाठ** ॥ पृष्ठपाटमिति प्रोक्त प्राकृते ' राजनामके ' ॥ **भुजा** ॥ दोर्दोषश्च प्रवेष्टश्च भुजो बाहु,'नृपे, ' स्मृतः ॥ ९४ ॥ **हात** ॥ पचशाखस्तु पाणिश्च करो हस्तोऽग्रपो ' नृपे ' ॥ **मणगट** ॥ करमूलस्तु सप्रोक्तो मणिबधश्च ' राजके ' ॥, ९५ **कोंपर** ॥ इलाकपोणिसप्रोक्ता कूर्परो ' राजनामके '॥ **प्रकोष्ठ** ॥

मणगटांपासून वर चार बोटें ॥ प्रकोष्ठो मणिबंधादिः स्यादंगुलिचतुष्टयम् ॥ १६ ॥ प्रकांड कोपरापासून प्रकोष्ठपावेतों ॥ प्रकाण्डः कूर्परात्प्रोक्तः प्रकोष्ठांतो 'नृपे' बुधैः ॥ अंगुली ॥ अंगुली करशाखा स्यालोके बोटें इति स्मृतः ॥ १७ ॥ तर्जनी ॥ प्रादेशिनी तर्जनीति प्रोक्ता 'राजनिघंटके' ॥ अंगुली ॥ अंगुष्ठः प्रथमो ज्ञेयस्तर्जनीति द्वितीयका ॥ १८ ॥ तृतीया मध्यमा प्रोक्ता चतुर्थी च ह्यनामिका । कनिष्ठिका पंचमीति प्रोक्ता 'राजनिघंटके' १९ नखें ॥ कामांकुशः कररुहः करजा नखरास्तथा ॥ नखास्तु पाणिजाश्चैव तदग्रऽगुलिसंभवः ॥ ७२०० ॥ पुनर्नवा पुनर्भूता सप्रोक्ता 'राजनामके' ॥ तळहातांचीं पाठ ॥ तलपृष्ठ करस्याधः प्रपाणीति 'नृपे' स्मृतः ॥ १ ॥ तळहात ॥ करस्योर्ध्वं करतलं सप्रोक्तं 'राजनामके' ॥ तळहाताच्या रेषा ॥ रेखा सामुद्रिका प्रोक्ता शुभाशुभनिवेदकः ॥ २ ॥ थानें ॥ स्तनश्चोरसिजश्चैव वक्षोजस्तु पयोधरः । कुचश्च कविभि. प्रोक्तो 'राजनामनिघंटके' ॥ ३ ॥ थानाच्या बोंड्या ॥ स्तनाग्र चूचुकं वृंत शिखा स्तनमुखं स्मृतम् ॥ ऊर ॥ वक्षः वत्समुरश्चैव क्रोडो हृदयमेव च ॥ ४ ॥ भुजांतर तु ह्युप्रोक्त 'राजनामनिघंटके' ॥ बेंबी ॥ नाभिस्तु घुंघुरावर्ता बेंबीति प्राकृते स्मृता ॥५॥ बस्ति ॥ नाभीखालील-पोट ॥ बस्तिर्नाभेरधोदेशः कविभिः परिकीर्तिता ॥ पोट ॥ कुक्षिः पिचंडो जठरं तुंदं स्यादुदरं च तत् ॥ ६ ॥ प्रोक्तं 'राजनिघंटे' तु कविभिः शास्त्र-वित्तमैः ॥ निक टिंच ॥ जीवस्थानं च मर्म च कटिप्रांत निकं 'नृपे' ॥ ७ ॥ गर्भाशय ॥ बस्तिस्तु वातशीर्ष च गर्भस्थान जरायुतम् । गर्भागारं तु विज्ञेय 'नृपे' गर्भाशयः स्मृतः ॥ ८ ॥ आंवचें स्थान । नाभिस्थानांतर प्रोक्तमामाशय 'नृपे' स्मृतः । नाभी आमाशयाचे मध्यं पक्काशय ॥ आमाशयश्च पक्काशो नाभरूर्ध्व. स्मृतो बुधैः ॥ ९ ॥ नाभीचे खालीं ॥ बस्ति-मूत्राशयः प्रोक्तो नाभेश्चाधो मनीषिभिः ॥ कटि कंबर ॥ कटि ककुद्मती श्रोणी नितंबश्च कटीरकम् ॥ १० ॥ आरोह चैव श्रोणी च फलकः रग-नापदम् ॥ फलश्च चेति विज्ञेय नर्माणि 'राजनामके' ॥ ११ ॥ नितंब ।

नितंबश्चरमः श्रोणी जघन वागृतो 'नृपे' ॥ **कंबरेच्या खालील जागा** ॥ कुकुंदरस्तु जघनकूपको 'राजनामके' ॥ १२ ॥ **टिरी** ॥ कटिप्रोथौ स्फिजौ पायुः प्रोक्तो 'राजनिघंटके' ॥ **गुद** ॥ अपानमासनं चैव गुद प्रोक्तं 'नृपे' बुधैः ॥ १३ ॥ **गुदअंडमध्यें भगंदर** ॥ गुदाडयोर्मध्यभागे भगंदरं प्रकीर्तितम् ॥ **अंड** ॥ मुष्कमंडं स्वडकोशो वृषण बीजपेशिका ॥ १४ ॥ **शिश्न** ॥ शिश्न शेफस्तु लिंगं च मेढ्रू साधनमेहनम् ॥ प्रोक्तं 'राजनिघंटे' च मुष्कं शस्त द्वय ध्रुवम् ॥ १५ ॥ **योनि** ॥ योनिर्भगो वरांगं च ह्युपस्थं स्मरमंदिरम् ॥ प्रोक्तं राजनिघंटे तु बुद्धिमद्भिर्न संशयः ॥ १६ ॥ **मांड्या** ॥ ऊरू तु सक्थिनी श्रोणी सक्था 'राजनिघंटके' ॥ **मांड्याची संधि** ॥ सक्थसंधिर्वंक्षणश्च प्रोक्तो 'राजनिघंटके' ॥ १७ ॥ **गुडघे** ॥ आष्टावच्चक्रिका जानुः प्रोक्ता 'राजनिघंटके' ॥ **पोटऱ्या** ॥ जंघा तु प्रसृता चैव पिंडिका 'राजनामके' ॥ १८ ॥ **पायांचे घोटे टांचा** ॥ घंटिका गुल्फ इति च पार्ष्णी टांच इति स्मृता ॥ **पायांचा चवडा** । पादाग्रं प्रपदं प्रोक्तं प्राकृते चवडा स्मृतः ॥ १९ ॥ **पाऊल** ॥ विक्रमश्चरणः पादो पदंघ्रिस्तु पदक्रमः ॥ **असनमांडी** ॥ उत्संगोंकपूर्वभागः क्रोड 'राजनिघण्टके' ॥ २० ॥ **चापट** ॥ तलश्चपेटः प्रतलः संहतांगुलिविस्तृता ॥ **मूठ** ॥ मुष्टिः सहत्समाख्यातां-ऽकुचितो 'राजनामके' ॥ २१ ॥ **पसा** ॥ प्रोक्तो राजनिघण्टे तु प्रसृतो विस्तृतांगुली ॥ **प्रादेश** ॥ अंगुष्ठात्तर्जनीप्रांतः प्रादेशश्चैव उच्यते ॥ २२ ॥ **ताल** ॥ अंगुष्ठमध्यमाभ्यांस्तु ताल इत्यभिधीयते ॥ **गोशृव** ॥ अंगुष्ठानामिकायोगो गोशृवः परिकीर्तितः ॥ २३ ॥ **वीत** ॥ लंबांगुष्ठकनिष्ठाभ्यां वितस्तिः प्रोच्यते बुधैः ॥ **हात** ॥ कूर्परान्मध्यमांतश्च हस्त इत्युच्यते बुधैः ॥ २४ ॥ **अरत्नी** ॥ अरत्नी प्राकृते प्रोक्तो मूढा हस्त इति ध्रुवम् ॥ कनिष्ठिकांतः संप्रोक्तो हस्तोऽरत्नीति पंडितैः ॥ २५ ॥ **वाव** ॥ लंबप्रसृतहस्तद्विवाव इत्यभिधीयते ॥ **मर्म** ॥ जीवागारं तु मर्मेति जीवस्थानं तदुच्यते ॥ २६ ॥ **मर्मस्थानें** ॥ भ्रूमध्ये चैव कंठे च गले शंखे कुचद्वये ।

ओष्ठयोश्चैव पृष्ठे च ग्रीवायां च गुदेंडयोः ॥ २७ ॥ पदे पाणौ बस्तिसंधौ मर्मस्थानं निगद्यते ॥ **लाळ** ॥ लाला तु मुखस्रावश्च शृणिका स्यंदिनी 'नृपे' ॥ २८ ॥ **घाम** ॥ स्वेदो घर्मस्तु घर्मांबु प्रोक्तो 'राजनिघण्टके' ॥ **चिपडी** ॥ ततो नेत्रमलं प्रोक्तं दूषिकेति महाजनैः ॥ २९ ॥ **विष्ठा** ॥ विष्ठा मलं तु पुरीषं विट्किट्टं पूतिकं 'नृपे' ॥ मूत्र ॥ मूत्रं तु गूढनिष्पंदः प्रस्रावः स्रवणं स्रवः ॥ ३० ॥ **सुरकुत्या** ॥ वली चर्मतरंगश्च त्वगूर्मिस्तु तरंगकः ॥ **पिकले केंस** ॥ पलितं तु जरालक्ष्म केशशौक्ल्यं तदुच्यते ॥ ३१ ॥ **चर्म** ॥ त्वक्चर्मासृग्धरा कृत्तिरजिनं देहचर्म च ॥ रक्तधारा रोमभूमिः शरीरावरणं 'नृपे' ॥ ३२ ॥ **अंगाचे केंस** ॥ रोमलोमांगजं त्वग्जं चर्मजं तनुरुहं स्मृतम् ॥ **दाढीमिशा** ॥ श्मश्रु दाढी मिशा प्रोक्ता पक्ष्मं तु पापण्या स्मृता ॥ ३३ ॥ **रसधातु** ॥ रसस्तु रसकश्चैव स्वेदमाता वपुः स्रवः ॥ चर्माधश्चर्मसारश्च रक्तस्तु रक्तमातृका ॥ ३४ ॥ **रक्तधातु** ॥ रक्तोसृगस्रभिरं त्वग्जं कीलालं क्षतजं तथा ॥ शोणितं लोहितं शोणमंशुलोहं च चर्मजम् । ॥ ३५ ॥ **मांस** ॥ मांसं तु पिशितं कव्यं पलं सारं तथैव च ॥ असृग्जं पललं कीरं जांगलं त्वामिषं 'नृपे' ॥ ३६ ॥ **मेद** ॥ मेदस्तु मांससारश्च मांसस्नेहो वसा वपा ॥ **हाडें** ॥ मेदोजमस्थिधातुश्च कुल्यं कीकसकं 'नृपे' ॥ ३७ **मज्जा** ॥ अस्थिसारश्च मज्जा च तेजोबीजं च जीवनम् । अस्थिजं देहसारोऽस्थिस्नेहः प्रोक्तो 'नृपे' ध्रुवम् ॥ ३८ ॥ **रेत** ॥ शुक्रं पुंस्त्वं तु रेतश्च बीजं वीर्यं च तेजसम् ॥ इंद्रियं पौरुषं चैव तथैवानंदिकारकम् ॥ ३९ ॥ रोमहर्षणकं चैव बलं शुक्रं 'नृपे' स्मृतम् ॥ **मुखावरील तेल** ॥ स्नेहस्तु तिलकं क्लोम मस्तिष्कं मस्तकोद्भवम् ॥४०॥ **आंतडी** । अंत्रं प्लीहं तु गुल्मं च पुरितद्राजनिघंटके ' ॥ **शिरा** ॥ **आंतील चर्म** ॥ वसा तु वसता स्नायुर्नसा देहस्य बल्कलम् ॥ ४१ ॥ **नाडी** ॥ शिराधारा सात्विकीति धमनी धारणी धरा ॥ तंतुकी जीवितज्ञा च नाडी सिरा च कंडरा ॥ ४२ ॥ महास्नायुर्महानाडी प्रोक्ता 'राजनामके' ॥ **स्रोतधमनीची छिद्रें** ॥ स्रोतं सुषिरं छिद्राणि कालखंडे शिरानि च ॥४३॥

यक्तु कविभिः प्रोक्तं 'राजनामनिघंटके' ॥ **डोईची कंवटी** ॥ शिरोस्थि तु करोटि स्याच्छिरस्त्राणं च शीर्षकम् ॥ ४४ ॥ खर्परं च कपालं च प्रोक्तं 'राजनिघंटके' ॥**पाठीचें हाड** ॥ पृष्ठास्थि तु कसेरुश्च शंखास्थि नलकं तथा॥४५॥ *नलिकं चैव पार्श्वास्थि पार्श्वकं 'राजनामके'* ॥ **हाडांचा सांपळा** ॥ शरीरास्थि च कंकालकरं कत्वस्थिपंजरः॥४६॥ **आत्मा प्राण**॥ आत्मा शरीरी क्षेत्रज्ञो पुद्गलः प्राण ईश्वरः ॥ **जीव** ॥ जीवो विभुः पुमानीशः सर्वज्ञः शंभुरव्ययः ॥ ४७ ॥ **प्रधानप्रकृति** । प्रधानं प्रकृतिर्माया चैतन्यं शक्तिरेव च । प्रोक्तं ' राजनिघंटे ' च कविभिः शास्त्रवित्तमैः ॥ ४८ ॥ **अहंकार** । अहंकारोभिमानश्च त्वहंता तदनन्तरम् । अहंममीति कविभिः प्रोक्तो ' राजनिघंटके ' ॥ ४९ ॥ **मन** ॥ मानसं हृदयं स्वांतं चित्तं चेतो मनस्तथा । हृत्प्रोक्तं विदुषांश्रेष्ठैः ' राजनामनिघंटके ' ॥ ५० ॥ **त्रिगुणः** ॥ सत्त्वं रजस्तम इति *गुणाः प्रोक्ता मनीषिभिः* ॥ **ज्ञानेंद्रिय** ॥ *श्रोत्रं त्वग्रसना नेत्रं नासा* चैवाक्षिपंचकम् ॥ ५१ ॥ **कर्मेन्द्रियें** ॥ वाक्पाणिपादपायुश्च गुह्यं कर्मेंद्रियाणि च ॥ **इंद्रियें** ॥ अक्षकं हृषीकं करणं ग्रहणं विषयेंद्रियम् ॥ ५२ ॥ **पंचभूतें** ॥ आकाशस्त्वनिलस्तोयं तेजःपृथ्वीति पंचकम् । **पंचभूतविषय** ॥ शब्दः स्पर्शो रसो रूपं गन्धश्च विषयाः स्मृताः ॥ ५३ ॥ **इति मनुष्यादिवर्गः** ॥

**अथ गदादिवर्गः** ॥ **रोगनाम** ॥ गदोरुजोस्तु व्याधिश्च रोगोऽपाटवनमिकः । उपघातोमयोरुक्चमापमगोऽमयोंऽतकः ॥ ५४ ॥ अतिस्तमोविकारश्च क्षयोग्लानिस्तथैव च । निर्जीवो मृत्युभृत्यश्च प्रोक्तो ' राजनिघंटके ' ॥ ५५ ॥ **राजयक्ष्मा** ॥ राजयक्ष्मा क्षयश्चैव रोगराजो गदाग्रणी । ऊष्मा शोषार्तिरोगश्च रोगाधीशो नृपामयः ॥ ५६ ॥ यक्ष्मा तु विदुषां श्रेष्ठैः प्रोक्तो ' राजनिघंटके ' ॥ **पांडुरोग** ॥ पांडुरोगस्तु पांडुश्च विसर्पः सचिवामयः ॥ ५७ ॥ **सूज** ॥ शोफः श्वयथु शोपश्च प्रोक्तो ' राजनिघंटके ' । **कास खोकला** ॥ *कासः क्वथुसंज्ञश्च प्रोक्तो*

' राजनिघटके ' ॥ ५८ ॥ **क्षुतं शिंक** ॥ क्षुतं तु क्षवथुः क्षुच ' नृपे '
प्रोक्ता भिषग्वरैः॥ **पडसें** ॥ प्रतिश्यायः पीनसश्च प्रोक्तो 'राजनिघटके' ५९॥
**मुखरोग** ॥ मुखामयस्तु विज्ञेयो मुखरोगो मनीषिभि. ॥ **नेत्ररोग** ॥ नेत्रा-
मयो नेत्ररागो लोके प्रोक्ता भिषग्वरैः ॥ ६० । **शिरीम** । दुश्चर्मा मडल
कोठस्त्वग्दोषश्चर्मदूषकः। **श्वेतकोड** । कुष्ठ तु पुडरीक च श्वित्र च चर्मचि-
त्रकम् ॥ ६१ ॥ **खरूज** । किलास सिध्मक पामा स्वस चैव विचर्चिका
॥ **खाज** ॥ कडू कडूती कडूया खर्जू कडूयना स्मृता ॥ ६२ ॥ **नायटे** ॥
सचारी क्षुठिका स्फोटा सूक्ष्मस्फोश विचर्चिका । **पीतफोड** । पीत-
स्फोटा तु पामा या क्षुद्रस्फोटा च कचिका ॥ ६३ ॥ **वारीक फोड** ॥
पिटका पिटिका चैव मसूराभा मसूरिका । **विस्फोटः फोड** । विस्फोटः
स्फोटकः स्फोटः प्रोक्तो' नृपे 'भिषग्जनैः॥ ६४ ॥ **चाई** ॥ केशघ्नश्चेंद्रलु-
प्तस्तु लोके चाई प्रकीर्तिता ॥ **दंतरोग** ॥ दतार्बुदो दतमूलं दतशोफो
द्विजव्रणः ॥ ६५ ॥ **गुल्म** ॥ गुल्मो जाठरग्रंथिश्च पृष्ठग्रंथिगडुर्मटः॥ **पक्ति-
शूल** ॥ पक्तिशूल तु शूल च पाकज परिणामजम् ॥ ३६ ॥ **नाडीव्रण** ॥
लूता मर्मव्रणो वृक्क नाडीव्रणमितीरितम् । **श्लीपद वारूळ** ॥ श्लीपदं पाद-
वल्मीक श्लीपद कविभिः स्मृतम् ॥ ६७ ॥ **फुटलेपाय** ॥ विपादिका तु
लोकेस्मिन्पादस्फोटोऽभिधीयते ॥ **विष्टंभ** ॥ विष्टभस्तु विबन्धश्च ह्यनाहो मल-
रोधनम् ॥ ६८ ॥ **मूळव्याध** । अर्शस्त गुदकीलः स्याद्दुर्नामा च गुदा-
कुरः ॥ **अतिसार, संग्रहणी** ॥ मलवेगोऽतिसारश्च ग्रहणी रुक्प्रवाहिका
॥ ६९ ॥ **वांति** ॥ वमथुर्वांतिरुद्गारो छर्दिका वमिरुच्यते । **हृदयरोग** ।
हृद्रोगो हृद्रदहृर्दो हृत्पाणः श्वास ईरितः ॥ ७० ॥ **ज्वर** ॥ ज्वरस्तु
सज्वरातंको रोगश्रेष्ठो महाज्वरः ॥ **हुंवेहुज** ॥ द्वद्वा द्वद्वदोषोत्थाः
शीताद्या विषमज्वरा ॥ ७१ ॥ अतीत्यागतयस्तेद्व्य ह्याह्निकत्र्याहिकादयः॥
**गलरोग** ॥ गलकील तु शुडी च गलशुडो गलस्तनः ॥ ७२ ॥ **रक्त-
पित्त** ॥ रक्तपित्त पित्तरक्त पित्तास्र पित्तशोणितम् ॥ **वातरक्त** ॥ रक्त-
वात वातरक्त वातास्र वातशोणितम् ॥ ७३ ॥ **तृष्णा** ॥ तृष्णा दैन्यपि-

पासा च तृट् तृषा परिकीर्तिता ॥ मद ॥ मदातंकस्तु कविभिर्मदात्यय इति स्मृतः ॥ ७४ ॥ पानात्यय ॥ पानात्ययो मद्व्याधिर्मद उद्रिक्तचित्तता ॥ मूर्च्छा । मूर्च्छा मोहो मुमूर्षा च लोके प्रोक्ता भिषग्वरैः ॥७५॥ स्वरक्षय ॥ स्वरसादस्तु लोकेस्मिन्स्वरक्षय इति स्मृतः । अरुचि । अश्रद्धोऽनभिलापश्च ह्यरुचिश्च स्वरोचकः ॥ ७६ ॥ प्रमेह ॥ मूत्रदोषः प्रमेहश्च मेह इत्यभिधीयते । कृच्छ्रं तु मूत्रकृच्छ्रं स्याद्वैद्यैः प्रोक्तं न संशयः ॥७७॥ मूतखडा ॥ मूत्ररोधोऽश्मरी प्रोक्तः पुरातनचिकित्सकैः ॥ वातव्याधि ॥ चलातंको वातव्याधिर्वातरोगोऽनिलामयः ॥ ७८ ॥ कंप ॥ कंपस्तु वेपनो वेपः कंपनो वेपथुः स्मृतः ॥ जांभई ॥ जृंभा तु जृंभिका चैव जृंभणं परिकीर्तितम् ॥ आळस ॥ आलस्यं मंदता मांद्यं कायद्वेषमिति स्मृतम् । उदररोग । तुदरस्थं विटभश्चैव जाठरश्च जलोदरः ॥७९॥ आंव । आमो मलश्च वैषम्यो भिषग्भिः परिकीर्तितः ॥ रक्तदोष ॥ रक्तार्तिश्चैव कविभिः संप्रोक्तः शोणितामयः ॥ ८० ॥ ज्वालागर्दभ । ज्वालागर्दभकश्चैव ज्वालरासभ एव च । ज्वालाखरगदश्चैव संप्रोक्तो भिषजांवरैः ॥ ८१ ॥ विद्रधि ॥ विद्रधिर्विद्रणं चैव हृद्ग्रंथिर्हृद्व्रणस्मृतः ॥ व्रणभगंदर ॥ व्रणो भगप्रदेशे यो भगंदर इति स्मृतः ॥८२ ॥ संताप ॥ संतापस्तु ज्वरस्तापः शोष ऊष्मा प्रकीर्तितः ॥ अंतर्दाह ॥ यश्चापि कोष्ठसंतापः सोंतर्दाह इति स्मृतः ॥ ८३ ॥ सदाहो मुखताल्वोष्ठे देवथुश्चक्षुरादिषु । पाणिपादांसमूलेषु शाखापित्त स उच्यते ॥८४॥ तंद्रा ॥ तंद्रा तु विषयाज्ञानं प्रमीला तंद्रिका तथा ॥ प्रलयश्चेंद्रियस्वापश्चेष्टानाशः प्रलीनता ॥ ८५ उन्माद ॥ उन्मादः स्याच्च विभ्रंश उन्मनायीति गीयते ॥ भूतोन्माद ॥ अवेशो भूतसंचारो भूतक्रांतिर्ग्रहागमः ॥ ८६ ॥ अपस्मार घुरें ॥ अपस्मारोंगविकृतिर्लोलांगो भूतविक्रिया ॥ स्तैमित्यं जडता ॥ स्तैमित्यं जडता जाड्यं शीतलत्वमपाटवम् ॥८७ । रोगी ॥ व्याधिता विव्हलो ग्लाष्णुर्ग्लानो मंदस्तथातुरः । अभ्यांतो आमितो रुग्णोमयोऽप्यपटुरुच्यते ॥ ८८ ॥ उपचार ॥ उपचारस्तूप-

चार्यश्चिकित्सारुक्प्रतिक्रिया । निग्रहो वेदनानिग्रः क्रिया चोपक्रमः समः ॥ ८९ ॥ **औषध** ॥ भेषज्यं भेषजं जैत्रमगदो जायुरौषधम् । आयुर्योगो गदारातिरमृतं कविभिः स्मृतम् ॥ ९० ॥ **पथ्यनाम** ॥ आत्मनीनं तु पथ्यं स्यादात्मानतं हित तथा। आयुष्य भिषजां नाथैर्लोके प्रोक्तं न संशयः ॥९१॥ **आरोग्य** ॥ पाटव लाघवं वार्तामारोग्यं स्यादनामयम् ॥ **निरोगी**॥ कल्यस्तु पटुलश्चैव लघुर्वातो निरामयः ॥ ९२ ॥ अगदो निरुजश्चैव निरातक इति स्मृतः ॥ **वैद्य** ॥ वैद्यश्रेष्ठा गदकारो रोगहारि भिषग्विधिः ॥ ९३ ॥ भेषज्यकुशलो विद्वानायुर्वेदी चिकित्सकः । दोषज्ञो जीवदः प्रोक्तः पुरातनमहाजनैः ॥ ९४ ॥ **इतिगदादिवर्गः समाप्तः** ॥

**अथ मिश्रवर्गः** । यान्यौषधानि मिलितानि परस्परेण संज्ञान्तरैर्व्यवहृतानि च योगविद्भिः । तपा स्वरूपकथनाय विमिश्रकाख्यवर्गं महागुणमुदारमुदीरयामः ॥ ९५ **त्रिकटु** ॥ मरिच पिप्पली शुंठी त्रयमेतद्विमिश्रितम् । त्रिकटु त्र्यूषण व्योष त्र्यूष खलुकटुत्रयम् ॥ ९६ ॥ **त्रिफला** । हरीतकी चामलक विभीतकमिति त्रयम् ॥ त्रिफला त्रिफली चैव फलत्रयफलत्रिकं ॥ ९७ ॥ **सुगंधित्रिफला** । जातीफलं पूगफलं लवगकलिकाफलम् । सुगंधित्रिफला ज्ञेया सुरभि त्रिफला तथा ॥९८॥ **मधुरत्रिफला** ॥ द्राक्षाकाश्मर्यखर्जूरीफलानि मिलितानि तु । मधुरात्रफला ज्ञेया मधुरादिफलत्रयम् ॥ ९९ ॥ **वाटयपुष्पम्** ॥ चंदन कुंकुमं वारि त्रयंमतद्दराधकम् । त्रिभागकुंकुमोपेत तदुक्तं वाट्यपुष्पकम् ॥७३००॥ **लवणत्रयम्** ॥ सैंधव च बिड चैव रूचक चेति मिश्रकम् । लवणत्रयमाख्यात तच्च त्रिलवण स्मृतम् ॥ १ ॥ **क्षारत्रयम** ॥ सर्जिका च यवक्षार टङ्कण क्षारमेव च । क्षारत्रयं च त्रिक्षार क्षारत्रितयमेव च ॥ २ ॥ **समत्रयम** ॥ हरीतकी नागरं च गुड चेति समत्रयम् । समत्रितयमित्युक्त त्रिसम च समत्रयम् ॥ ३ ॥ **मधुरत्रय** ॥ सितामाक्षिकसर्पींषि मिलितानि यदा तदा । मधरत्रयमाख्यात त्रिमधु स्यान्मधुत्रयम् ॥ ४ ॥ **सितात्रयम्** ॥ गुडोत्पन्ना हिमोत्था च मधुरा चेति मिश्रितम् । त्रिश-

कैरा च निसिता सितान्त्रयसितात्रिकम् ॥ ५ ॥ **अथांजनत्रयम्** ॥ कालाजनसमायुक्ते पुष्पाजनरसाजन । अजनत्रितय प्राहुस्त्र्यंजन चाजनत्रयम् ॥ ६ ॥ **समत्रिदोष** ॥ वातः पित्त कफश्चेति त्रयमेतद्विमिश्रितम् । दोषत्रय त्रिदोष स्याद्दोषत्रितयमित्यपि ॥ ७ ॥ **दोपत्रयम्** ॥ वातपित्तकफा यत्र समता यान्ति नित्यशः । त्रिदोषसममित्येतत्समदोषत्रय तथा ॥ ८ ॥ **कंटकत्रय** ॥ बृहती चाग्निधमनी दु.स्पर्शा चेति च त्रयम् । कटकाग्नित्रय प्रोक्त निकण्ट कण्टकत्रयम्॥९॥ **त्रिकार्पिकं चतुर्भद्रम्**॥ नागरातिविषा मुस्ता त्रयमेक त्रिकार्पिकम् गुडूच्या मिश्रित तच्च चातुर्भद्रकमुच्यते ॥ १० ॥ **देवकर्दम** । श्रीखडागरुकर्पूरकाश्मीरैश्च समाशकः । मृगागमुकुटाद्यैश्च मिलितैर्देवकर्दम' ॥ ११ ॥ **यक्षकर्दम**॥ कुकुमागरुकुरगनाभिका चद्रचदनसमाशसभृतम् । त्र्यक्षपूजनपरैकगोचर यक्षकर्दममिद मचक्षते ॥ १२ ॥ **पंचसुगंधी** । कर्पूरककोललवगपुष्पगुहाकजातीफलपचकेन । समाशभागेन च योजितेन मनोहर पचसुगन्धिक स्यात् ॥ १३ ॥ **पंचकोल** ॥ पिप्पली पिप्पलीमूल चव्यचित्रकनागरैः । सर्वैरकत्र सपृक्त पचकोलकमुच्यते ॥ १४ ॥ **पंचवल्कल** । न्यग्रोधोदुम्बराश्वत्थप्लक्षवेतसवल्कलैः । सर्वैरेकत्र मिलितैः पचवल्कलमुच्यते ॥ १५ ॥ **लघुपंचमूल** ॥ शालिपर्णी पृश्निपर्णी बृहती कटकारिका । तथा गोक्षुरकश्चेति लघ्विद पचमूलक ॥ १६ ॥ **महापंचमूलम्**॥ बिल्वोग्निमथः स्योनाकः काश्मर्य पाटली॥तथा॥ सर्वैस्तु मिलितैरेतैः स्यान्महापचमूलकम् ॥१७॥ **मध्यमपंचमूलम्** ॥ पचमूलकयोरेतद्वद्वय च मिलित यदा । तदा भिषग्भिराख्यात गुणाढ्य दशमूलकम् ॥१८॥ **पंचामृतयोग** । गुडूचिगोक्षुरश्चैव मुसली गुडिका च सा । शतावरी च पचाना योगः पचामृताभिधः ॥ १९ ॥ **दिव्यपंचामृतम्** । गव्यमाज्य दधि क्षीर माक्षिक शर्करान्वितम् । एकत्र मिलित ज्ञय दिव्य पचामृत स्मृतम् ॥ २० ॥ **पचगव्य** । गोमूत्र गोमय क्षीर गव्यमाज्य दधीनि च । युक्तमेतद्यथायोग्य पचगव्यमुदाहृतम् ॥ २१ ॥ **निंबपंच-**

कम् । निंबस्य पत्रत्वक्पुष्पफलमूलैर्विमिश्रितैः । पंचनिंबसमाख्यातं तदुक्तं निंबपंचकम् ॥ २२ ॥ **अम्लपंचकम्** । कोलदाडिमवृक्षाम्लचूक्रिका चाम्लवेतसः ॥ फलपंचाम्लमुद्दिष्टमम्लपंचफलस्मृतम् ॥ २३ ॥ **फलाम्लपंचकम्॥** जंबीरनागरंगसहाम्लवेतसैः सतिचिंडीकैश्च सबीजपूरकैः ॥ समांशभागेन तु मेलितैरिदं द्वितीयमुक्तं च फलाम्लपंचकम् ॥ २४ ॥ **आम्लवर्गः** ॥चांगेरीलकुचाम्लवेतसयुतं जंबीरकं पूरकं नारंगं फलशाडवोपि च कपित्थाम्लं च बीजाम्लकम् ॥ अंबष्ठासहितं द्विरेत्रदुदितं पंचाम्लकं तद्वयं विज्ञेयं करमर्दनिंबुकयुतं स्यादाम्लवर्गाह्वयम् ॥ २५ ॥ **सिध्यौषधपंचकम्॥** तैलकंदं सुधाकंदं क्रोडकंदं रुदंतिका ॥ सर्पनेत्रयुताः पंचसिध्यौषधिकसंज्ञकः ॥ २६ ॥ **पंचशिरीष॥** शैरीषकुसुमं मूलं फलं पत्रं त्वगित्ययम् ॥ कीटारि कथितो योगः पंचशैरीषकं स्मृतम् ॥ २७ ॥ **पंचांगम्** ॥ त्वक्पत्रं कुसुमं मूलं फलमेकस्य शाखिनः॥ एकत्र मिलितं चैतत्पंचांगमिति संज्ञितम् ॥ २८ ॥ **पंचगणयोग॥** विदारिगंधा बृहती पृश्निपर्णी निदिग्धिका ॥ श्वदंष्ट्रा चेति संप्रोक्तो योगः पंचगणाभिधः ॥ २९ ॥ **पंचोपविषम्** ॥ स्नुह्यर्ककरवीराणि लांगली विषमुष्टिका ॥ एतान्युपविषाण्याहुः पंचपांडित्यशालिनः ॥ ३० ॥ **महापंचविषम्** ॥ अत्यम्लपर्णी काडीरमालाकंदद्विसूरणैः ॥ प्रोक्तो भवति योगोयं महापंचविषाभिधः ॥ ३१ ॥ **पंचमूत्र** ॥ गवामजानां मेषाणां महिषीणां च मिश्रितम् ॥ मूत्रेण गर्दभीनां यत्तन्मूत्रं मूत्रपंचकम् ॥ ३२ **लोहपंचकम्** ॥ सुवर्णं रजतं ताम्रं त्रयमेतत्त्रिलोहकम् ॥ वंगनागसमायुक्तं तत्प्रोक्तं पंचलोहकम् ॥ ३३ ॥ **द्वितीयपंचलोहम्** । सुवर्णं रजतं ताम्रं त्रपु कृष्णायसं समम् ॥ ग्रहांगमिति बोद्धव्यं द्वितीयं पंचलोहकम् ॥ ३४ ॥ **क्षारपंचकम्** ॥ यवमुष्ककसर्जानां पलाशतिलयोस्तथा ॥ क्षारैस्तु पंचभिःप्रोक्तः पंचक्षाराभिधो गणः ॥ ३५ ॥ **पंचलवणम्** ॥ काचसैंधवसामुद्रविडसौवर्चलैः समैः ॥ स्यात्पंचलवणं तच्च मृजोपेतं षडाह्वयम् ॥ ३६ ॥ **इति पंचवर्गः** ॥ **क्षारषट्कम्** ॥ यवाग्रमार्ग-

कुष्टजलांगलीतिलमुष्ककैः ॥ क्षारैरेतैस्तु मिलितैः क्षारपट्कान्हयो गणः ॥ ३७ ॥ **सप्तधातवः** ॥ रसासृङ्मांसमेदोस्थिमज्जाशुक्राणि धातवः ॥ शरीरस्थैर्भवेदेतैः सप्तधातुगणो मतः ॥ ३८ ॥ **महारसाष्टकम्** ॥ दरदः पारदोसस्यो वैक्रांत कांतमभ्रकम् ॥ माक्षिकं विमलाश्चेति स्युरेतेष्टौ महारसाः ॥३९॥ **उपरसः** । खेचरांजनकंकुष्ठ गधारी गैरिकाक्षितिः । शैलेयाजनसंमिश्रा शंसंत्युपरसान्बुधाः ॥ ४० ॥ **सामान्यरसः** ॥ कपिलगौरीचपलाफपर्दं सशैलसिंदूरकवन्हिजारान् ॥ पापाणिनोबोदरशृंगयुक्ता निस्यष्टसामान्यरसानिचाहुः ॥ ४१ ॥ **अष्टलोह** ॥ पचलोहसमायुक्तैः कांतमुण्डकतीक्ष्णकैः ॥ कल्पितः कथितो धीरैरष्टलोहाभिधो गणः॥४२॥ **क्षारदशकम्** ॥ शिग्रुमूलकपलाशचुक्रिका चित्रकार्द्रकसनिंबसम्भवैः ॥ इक्षुशेखरिकगोक्षुकोद्भवैः क्षारपूर्वदशक प्रकीर्तितम् ॥ ४३ ॥ **मूत्रदशकम्** ॥ मूत्राणि हस्ति महिषोष्ट्रगवाजकानां मेषाश्वरासभक्रमानृपमानृणाम् । यत्नेन यत्र मिलितानि दशेति तानि शास्त्रेषु मूत्रदशकान्हयमांजि भान्ति ॥ ४४ ॥ **जीवकादिः** ॥ स्याज्जीवकर्षभवयुग्मयुगद्विमेदाकाकोलिकाद्वयपुनर्द्विकशूर्पपर्ण्यः । जीव्या मधुकयुतया मधुराव्हयोयं योगो महानिह विराजति जीवकादिः ॥४५॥ **अष्टवर्गः** ॥ जीवकर्षभकौमेदे काकोल्यौ ऋद्धिवृद्धिकौ । एकत्र मिलितैरेतैरष्टवर्ग उदाहृतः ॥ ४६ ॥ **सर्वौषधिवर्गः** ॥ कुष्ठमांसीहरिद्राभिर्वचाशैलेयचंदनैः । मुराचंपककर्पूरमुस्तैः सर्वौषधि स्मृतः ॥ ४७ ॥ **सुगंधामलकम्** ॥ सर्वौषधिसमायुक्ताः शुष्काश्चामलकत्वचः । यदा तदायं योगः स्यात्सुगन्धामलकः स्मृतः ॥ ४८ ॥ **संतर्पणम्** । द्राक्षादाडिमखर्जूरीकदलीशर्करान्वितम् । लाजचूर्णं समध्वाज्यं सतर्पणमुदाहृतम् ॥ ४९ ॥ **मंथः** ॥ सक्तुभिः सर्पिषाभ्यक्तैः शीतवारिपरिप्लुतैः । नात्यच्छो नातिसांद्रस्य मंथ इत्यभिधीयते ॥ ५० ॥ **रक्तवर्गः** ॥ दाडिमं किंशुकं लाक्षा बंधूकं च निशाद्वयम् । कुसुंभपुष्पं मंजिष्ठा इत्येते रक्तवर्गकः॥५१॥ **शुक्लवर्गः** ॥ खटिनी श्वेतसंयुक्ता शंखशुक्तिवराटिका । मृष्टाश्मशर्करा

चेति शुक्लवर्ग उदाहृतः ॥ ५२ ॥ **द्विधाष्टादशांगः** ॥ मार्गीसिटींपुष्कर-वत्सबीज.दुरालभाभृंगिपटोलतिक्ताः। किरातविश्वेन्द्रकणेंद्रबीजधान्यानि तिक्तं सुरदारुकं च ॥ ५३ अष्टादशांगामिध एषयोगः समागतः स्याद्-शमूलकेन। द्विधा च मार्ग्यादिक एक एष ज्ञेयो द्वितीयस्तु किरातकादिः ॥ ५४ ॥ **अथशिखरिणी** ॥ द्वात्रिंशत्पलममितं दधिपलान्यष्टौ च खडं पलस्यार्धं नेन्मरिचस्य तेन तुलितं युक्तं त्व-गेलाव्हयम् ॥ मध्वाज्यं च युतं तदर्धमिलितैः संशोधिते योजिता भांडे स्याद्धिमवासिता शिखरिणी श्रीकंठभोग्यागुणैः ॥ ५५ ॥ **पचभृग** ॥ देवदाली शमी भृंगा निर्गुंडी सजिकस्तथा ॥ रोगार्तस्नानमात्राहिं पच-भृंग इतिस्मृतं ॥ ५६ ॥ **जीवपंचमूल** ॥ अभरिवीरा जीवंती जीवकर्ष-भकौस्मृतौ ॥ जीवनाख्यं च चक्षुष्यं कफपित्तानिलापहम् ॥ ५७ ॥ **तृणपंचमूल** ॥ तृणाख्यं पित्तजिद्दर्भशरकाशेक्षुशालिभिः ॥ एतैरेकीकृतं पंचमूलं तु तृणसंज्ञकम् ॥ ५८ ॥ **वेसवार** ॥ शुंठीमरिचपिप्पल्या धान्यकाजाजिदाडिमम् ॥ पिप्पलीमूलसंयुक्तवेसवार इति स्मृतः ॥ ५९ ॥ **संभार** ॥ कासमर्दकपत्राणां कृतं चूर्णमुलूखले ॥ वेसवारसमायुक्तं समाहं भाजने स्थितम् ॥ ६० ॥ ततो.हिंगुरसाक्तेन मिश्रितास्तेन ते तथा। दिवाकरकरैः शोष्या वटकाःकासमर्दकाः ॥६१॥ [1]शाकव्यंजन-मांसानां संभार इति ते मताः। अनेन संयुताः पाका वन्हिवीर्यबलप्रदाः ॥ ६२ ॥ **विदारिगंधः** ॥ विदारिगंधा बृहती पृश्निपर्णी निदिग्धिका ॥ ज्ञेयो विदारिगंधाढ्यो गणः पित्तानिलापहः ॥ ६३ ॥ **पंचकषायः** ॥ पथ्यामलकमंजिष्ठा लोध्रतिंदुकवाश्ववा ॥ एते पंचकषायाश्च कर्णप्रक्षालने वराः ॥ ६४ ॥ इति सिद्धेश्वरकृतराघवविरचिते मिश्रकाध्यायः समाप्तः ॥

---

१ सनमालकः

**विशेष सूचना**— पुढील सर्व पुस्तकें व यां-शिवाय औषधीगुणदोष किंमत एक रुपाया आठ आणे व आयुर्वेदरहस्य अथवा वाग्भटार्थविस्तार भाग १ ला किंमत १ रु. ही पुस्तकें रोखीनें अथवा व्ही. पी. नें आमचेकडे विकत मिळतील

शंकर दाजी शास्त्री पदे

